सह तस्या कदा सगम स्यात् ननु वितर्के ॥१९९॥ किं च—चित्रेति—कानने उत्कण्ठित वेषमुनि इत्थ दिनानि गमयति । दिनगमनव्यापारान् वर्णयति—चित्रालेखनकर्मभि निजमनसि निखाताया इव प्रियाया वस्त्रे चित्रलेखनकार्ये, **मनसिजेति**—मनसिजो मदन तस्य व्यापाराः मधुरप्रवृत्तय तेपा साराणा स्मरणै, **गाढेति**—सन्तत मनसा दृढभावनया अग्रस्थिताया प्रियतमाया पादयो असकृत् मूर्ध्ना प्रणामकरणक्रमै स्वप्न इति सहवासवियोगविषये स्नेहदु खागमै वेषमुनि दिनानि कानने समुत्कण्ठित यापयति स्म ॥२००॥ इति निर्वन्धेन अनवरत ध्यायन् चिन्तयन् द्वादशवर्षाणि समानैषीत् यापयति स्म । शूरदेवभट्टारकोऽप्याभ्या सह तेपु विपयेपु शूरदेवाचार्योऽपि वारिषेणपुष्पदन्तमुनियुगलेन सह तेपु तेपु विपयेपु विविधदेशेपु तीर्थकृताम् ऋपभादिवर्धमानान्ताना चतुर्विंशतेर्जिनवराणा पञ्चकल्याणैर्मङ्गलानि मङ्ग पुण्य लान्तीति यच्छन्ति भवतेभ्य इति मगलानि म पाप गालयन्तीति वा मगलानि पुण्योत्पादीनि पापविनाशीनि च स्थानानि जन्मादिनिर्वाणपर्यन्तानि स्थानानि तीर्थभूमीर्वन्दित्वा पुनर्विहारवशात्तत्रैव जिनायतनोत्तसितोपान्तशैलचूले पञ्चशैलपुरे जिनानाम् आयतनानि गृहाणि तै उत्तसिता भूपिता उपान्ता समीपस्था शैलस्य पर्वतसबन्धिनी चूला शिखर यस्य तस्मिन् पञ्चशैलपुरे राजगृहे, समागत्य आत्मन ( शूरदेवमुने ) वारिषेणऋषेश्च तद्दिवसे पर्युपासितोपवासत्वात् स्वीकृतचतुर्विधाहारत्यागात्, त पुष्पदन्तम् एकाकिनम् एव प्रत्यवसानाय आहाराय आदिदेश आज्ञा ददाविति भाव । 'भक्षित-चर्वित-लीढ-प्रत्यवसित-गिलित-खादितरसातम्' इत्यमर । तदर्थम् आदिष्टेन तेन च चिन्तितम् । 'चिरात् कालात् खल्वेकस्मादपमृत्योर्जीवन्नुद्धरितोऽस्मि । दीर्घ कालोऽतीत खलु अद्य एकस्मादपमरणात् जीवन् उत्तीर्णोऽभवम् ( सप्रति हि मेऽन्यूनानि विपुलानि पुण्यानि अवेक्ष्य दृष्ट्वा दीक्षा मुमुक्षुणा दीक्षा त्यक्तुम् इच्छा यस्य तथाभूतेन तेन मङ्क्षु शीघ्र पाशपरिक्षेपक्षरितेनेव, पाशस्य जालस्य परि सर्वत क्षेप आवरण तस्मात् क्षरितेन च्युतेन पक्षिणा विहगेन इव पलायितुम् आरब्धम् । वारिषेण तथाप्रस्थानात् कृतोदर्कं वितर्क्य ज्ञातोत्तरफल यथा स्यात्तथा तस्य शीघ्र गमनमवलोक्य दीक्षाया अनेन जलाञ्जलिर्दत्तेति ऊह कृत्वा 'अवश्यमय जिनरूप जिहासुरिव सौत्सुक्य विक्रमते जिनरूप जिनदीक्षा जिहासुरिव त्यक्तुमिच्छन्निव उत्कण्ठित विक्रमते अश्ववद्वेगेन याति । 'तदेप कपायमुष्यमाणधिषण समयप्रतिपालनाधिकरणैर्न भवत्युपेक्षणीय ' तस्मात् एप पुष्पदन्तमुनि कपायै क्रोधादिभि मुष्यमाणा अपह्रियमाणा धिषणा बुद्धि यस्य स समयस्य जिनशासनप्रतिपालने रक्षणे अधिकरणै आधारभूतै जिनशासनरक्षणभारवाहिभि न भवत्युपेक्षणीय न त्याज्य इति अद्धा यथार्थम् अञ्जसा अनुध्याय विचिन्त्य तमनुरुध्य त पुष्पदन्तम् अनुसृत्य एतत्स्थापनाय जनकनिकेत पितु श्रेणिकभूपस्य निकेत गृह जगाम । चेलिनी महादेवी पुत्र मित्रेण सत्र सह उपढौकमानम् आगच्छन्तम् अवेक्ष्य तदभिप्रायपरीक्षार्थ सराग वीतराग चासनमयच्छत् । वारिषेणस्तेन सम चरमोपचार चरम अन्तिम उपचार धाम असिमन् तत् चरमोपचार वीतरागोपशमयुक्त विष्टर सिंहासनम् अलकृत्य भूपयित्वा अम्ब, समाहूयता समस्ता अपि आत्मीया स्नुपा ।

[पृष्ठ ८१] ( तदनु वारिषेणजाया श्वश्र्वा आज्ञया तत्रागता ) कथभूतास्ता वनदेवता इव यथा वनदेवता प्रसूनोत्तमोत्तरङ्गितकुन्तलारामा भवन्ति । पुष्पभूपितोत्तरङ्गितकुन्तलै केशै आसमन्तात् रामा रमणीया भवन्ति । तथा ता वध्वोऽपि कल्पलता इव मणिभूषणरमणीयाङ्गनिर्गमा यथा कल्पलता कल्पवल्लय रत्नालङ्कारमनोहरावयवोत्पत्तय तथा वध्वोऽपि । प्रावृष इव समुन्नद्धपयोधराविद्धमध्यभागा यथा वर्षा समुन्नतजलधरावृतनभोमध्यभागास्तथा समुन्नतस्तनावर्जितावलग्नभागा । सकलजगल्लावण्यलवलिपिलिखिता इव समस्तलोकसौन्दर्यांशरूपलिपिना लिखिता इव सुभगभोगायतनाभोगा सुभगानि रमणीयानि तानि तानि भोगायतनानि शरीराणि तेषाम् आभोग विस्तारो यासा ता । पुन कथभूता । कङ्केलिकाननक्षितय इव पादपल्लवोल्लासितविहारविषया अशोकवनभूमयो यथा पादा मूलानि तानारभ्य पल्लवै किसलयै उल्लासिता शोभिता विहारविषया उद्यानप्रान्ता याभिस्ता तथा इमा वध्वोऽपि पादपल्लवा चरणकिसलया तै उल्लसिता शोभिता विहारविषया लीलाप्रदेशा याभिस्ता । कमलिन्य इव मणिमञ्जीररणितोन्मदमरालमण्डलस्खलितचलनजलेशया यथा कमलिन्य कमललता रत्नजडितनूपुररवमिव शब्द कुर्वाणा उन्मदा उन्मत्ता

वारिषेण, पर्याप्तिम् अत्रावस्थानेन, अशालम् उपवेशनेन । प्रकामम् अतिशयेन शकलित खण्डित कुसुमास्त्रस्य मदनस्य रहस्य गूढस्वरूप येन तत्सम्बोधनम्, हे वयस्य हे सखे, इदानीमधुना, यथार्थनिर्वेदावनि यथार्थ वस्तुभूत निर्वेद. विरक्तिभाव तस्य अवनि स्थानम् अह मनोमुनिरस्मीति मनसा मुनि भावेन मुनिरस्मि इति च अवधाय विज्ञाय, विशुद्धहृदयौ तौ द्वावपि चेलिनीमहादेवीम् अभिनन्द्य, उपसद्य च गुरुपादोपशल्य गुरुचरणसमीपम् उपसद्य स्थित्वा च नि शल्याशयौ मायामिथ्यात्वनिदानशल्यरहिताभिप्रायौ साधु तपश्चक्रतु । भवति चात्र श्लोक —सुदतीति—कृतत्राण कृत त्राण रक्षण येन स वारिषेण सुदतीसगमासक्त । तपस्विन पुष्पदन्त सयमे स्थापयामास ॥२०२॥

इत्युपासकाध्ययने स्थितिकारकीर्तनो नाम चतुर्दश कल्प ॥१४॥

## १५ वज्रकुमारस्य विद्याधरसमागमो नाम पञ्चदशः कल्पः

[ पृष्ठ ८२ ] चैत्यैरिति—चैत्यै जिनबिम्बै, चैत्यालयै जिनमन्दिरै विविधात्मकै ज्ञानै व्याकरण-काव्यन्यायधर्मशास्त्राणा ज्ञानै, विविधात्मकै तपोभि अनशनादिद्वादशविधैस्तपोभि, पूजामहाध्वजाद्यैश्च नित्यपूजा, अष्टाह्निकपूजा, इन्द्रमहपूजा महामहपूजादिभि मार्गप्रभावना कुर्यात् जिनधर्म प्रभावयेत् ॥२०३॥

[ पृष्ठ ८३ ] ज्ञाने, तपसि, पूजायाम् । केषा यतीना य असूयति मत्सर करोति मुनीना ज्ञानम्, तप उपासना च दृष्ट्वा यो दुर्धी असूयति तेषा गुणेभ्य द्रुह्यति नून सत्यमेव तस्यापि स्वर्गापवर्गभूलक्ष्मी सुरेन्द्रलक्ष्मी तथा अपवर्गभूलक्ष्मी मोक्षभूमिलक्ष्मी असूयति मत्सर करोति उभे ते लक्ष्म्यौ तस्मान्नराद् दूर तिष्ठत इति भाव ॥२०४॥ समर्थ इति—यो धार्मिको नर चित्तेन धैर्यादिना ज्ञानेन वा, वित्तेन धनधान्यवस्त्रादिदानेन इह अस्मिन्देशे समर्थ सन्नपि अशासनभासक शासनस्य जिनधर्मस्य भासक प्रभावनाकारको न स्यात् स चित्तवित्ताभ्या समर्थ सन्नपि अमुत्र परलोके न भासक भासको न भवति । तस्य स्वर्गादिलक्ष्मीर्वशा न भवतीति भाव ॥ २०५ ॥ तद्दानेति—तस्मात् दानैश्चतुर्विधै, ज्ञानै आध्यात्मिकैरागमजैश्च विज्ञानै, चतु षष्टिकलाना ज्ञानै, महामहमहोत्सवै महामहादिपूजाविशेषै धनिकै राजभिश्च क्रियमाणै एहिकापेक्ष-योज्झित अह देव स्यामह वसुमतीपति स्यामिति इहलोकसबन्धिधनाद्यभिलाषया मुक्त धार्मिक दर्शनोद्योतन कुर्यात् दर्शनस्य प्रकाशनप्रभावना कुर्यात् ॥२०६॥

[ पृष्ठ ८४-८५ ] श्रूयतामत्रोपाख्यानम्—अत्र प्रभावनागुणे आख्यान प्रसिद्धा कथा श्रूयताम् आकर्ण्यताम् वज्रकुमारस्य कथा शृण्वन्तु जना इति भाव । पञ्चालदेशेषु श्रीमदिति—श्रियानन्तचतुष्टयलक्ष्म्या युक्तस्य पार्श्वनाथपरमेश्वरस्य यश प्रकाशनपात्रे अहिच्छत्रनामनगरे चन्द्राननाख्या या अङ्गना नारी सा एव रति तस्या कुसुमचापस्य मदनस्य द्विषन्तपस्य तन्नामधेयस्य भूपते सोमदत्तो नाम पुरोहितोऽभूत् । कथभूत स उदितोदित-कुलशील प्रति पुरुषम् अधिकाधिकतया प्राप्तोदये उन्नति प्राप्ते कुलशीले वशसदाचारौ यस्य स षडङ्गे वेदे शिक्षा-कल्प-व्याकरण-निरुक्त-ज्योतिष च्छन्दासि वेदस्य षडङ्गानि तदात्मके वेदे दैवे दैवविषये, निमित्ते अष्टाग-निमित्ते, दण्डनीत्या च अभिविनीतमति कुशलधी । दैवीना देवताप्रकोपजातानाम्, मानुषीणा मनुष्यैर-रिभिरुत्पादितानाम् आपदा प्रतिकर्ता निवारक, यज्ञदत्ताभट्टिनीभर्ता तन्नामधेयाया ब्राह्मण्या भर्ता पति, सोमदत्तो नाम पुरोहितोऽभूत् । एकदा तु सा किल यज्ञदत्ता अन्तर्वत्नी अन्त गर्भमध्यस्थम् अपत्य विद्यतेऽस्या इति गर्भिणीत्यर्थ, सती माकन्दमञ्जरीकर्णपूरेषु माकन्द आम्रतरु तस्य मञ्जर्या कर्णपूरेषु तन्नामकालङ्कारेषु तत्परिणतफलाहारेषु च समासादितदोहला लब्धेच्छावती अभूत् । व्यतिक्रान्तरसालवल्लरीफलकालनया व्यती-ताम्रमञ्जरीफलसमयत्वात्, कामितम् अभिलषित अनाप्तवती अलभमाना, शिफासु व्ययमाना प्रतानिनीव शिफासु मूलेषु पीडायुक्ता वल्लीव तनुतानव देहकार्श्य उपेयुषी जग्मुषी तेन पुरोहितेन ज्ञातिजनेन बन्धुगणेन च प्रबन्धेन आग्रहेण पृष्टा हृदयेष्ट मनोऽभिलाषम् अभाषिष्ट अब्रूत । भट्टस्तन्निशम्य श्रुत्वा "कथम् एतन्मनोरथम् अयथार्थपथम् अस्मन्मनोमथ अगर्ह्यप्रार्थन कथ करिष्यामि" एतन्मनोरथ अस्या यज्ञदत्ताया

वारिषेण, पर्याप्तम् अत्रावस्थानेन, अत्रालम् उपवेशनेन । प्रकामम् अतिशयेन शकलित खण्डित कुसुमास्त्रस्य मदनस्य रहस्य गूढस्वरूप येन तत्सम्बोधनम्, हे वयस्य हे सखे, इदानीमधुना, यथार्थनिर्वेदावनि यथार्थ वस्तुभूत निर्वेद विरक्तिभाव तस्य अवनि स्थानम् अह मनोमुनिरस्मीति मनसा मुनि भावेन मुनिरस्मि इति च अवबाय विज्ञाय, विशुद्धहृदयौ तौ द्वावपि चेलिनीमहादेवीम् अभिनन्द्य, उपसद्य च गुरुपादोपशल्य गुरुचरणसमीपम् उपसद्य स्थित्वा च नि शल्याशयौ मायामिथ्यात्वनिदानशल्यरहिताभिप्रायौ साधु तपश्चक्रतु । भवति चात्र श्लोक —सुदतीति—कृतत्राण कृत त्राण रक्षण येन स वारिषेण सुदतीसगमासक्त । तपस्विन पुष्पदन्त सयमे स्थापयामास ॥२०२॥

इत्युपासकाध्ययने स्थितिकारकीर्तनो नाम चतुर्दश कल्प ॥१४॥

## १५ वज्रकुमारस्य विद्याधरसमागमो नाम पञ्चदशः कल्पः

[ पृष्ठ ८२ ] चैत्यैरिति—चैत्यै. जिनबिम्बै, चैत्यालयै जिनमन्दिरै विविधात्मकै ज्ञानै व्याकरण-काव्यन्यायधर्मशास्त्राणा ज्ञानै, विविधात्मकै तपोभि अनशनादिद्वादशविधैस्तपोभि, पूजामहाध्वजाद्यैश्च नित्यपूजा, अष्टाह्निकपूजा, इन्द्रमहपूजा महामहपूजादिभि मार्गप्रभावना कुर्यात् जिनधर्म प्रभावयेत् ॥२०३॥

[ पृष्ठ ८३ ] ज्ञाने, तपसि, पूजायाम् । केषा यतीना य असूयति मत्सर करोति मुनीना ज्ञानम्, तप उपासना च दृष्ट्वा यो दुर्धी असूयति तेषा गुणेभ्य द्रुह्यति नून सत्यमेव तस्यापि स्वर्गापवर्गभूलक्ष्मी सुरेन्द्रलक्ष्मी तथा अपवर्गभूलक्ष्मी मोक्षभूमिलक्ष्मी असूयति मत्सर करोति उभे ते लक्ष्म्यौ तस्मान्नराद् दूर तिष्ठत इति भाव ॥२०४॥ समर्थ इति—यो धार्मिको नर चित्तेन धैर्यादिना ज्ञानेन वा, वित्तेन धनधान्यवस्त्रादिदानेन इह अस्मिन्देशे समर्थ सन्नपि अशासनभासक शासनस्य जिनधर्मस्य भासक प्रभावनाकारको न स्यात् स चित्तवित्ताभ्या समर्थ सन्नपि अमुत्र परलोके न भासक भासको न भवति । तस्य स्वर्गादिलक्ष्मीर्वशा न भवतीति भाव ॥ २०५ ॥ तद्दानेति—तस्मात् दानैश्चतुर्विधै, ज्ञानै आध्यात्मिकैरागमजैश्च विज्ञानै, चतु षष्टिकलाना ज्ञानै, महामहमहोत्सवै महामहादिपूजाविशेषै धनिकै राजभिश्च क्रियमाणै ऐहिकापेक्ष-योज्झित अह देव स्यामह वसुमतीपति स्यामिति इहलोकसबन्धिधनाद्यभिलापया मुक्त धार्मिक दर्शनोद्योतन कुर्यात् दर्शनस्य प्रकाशनप्रभावना कुर्यात् ॥२०६॥

[ पृष्ठ ८४-८५ ] श्रूयतामत्रोपाख्यानम्—अत्र प्रभावनागुणे आख्यान प्रसिद्धा कथा श्रूयताम् आकर्ण्यताम् वज्रकुमारस्य कथा शृण्वन्तु जना इति भाव । पञ्चालदेशेषु श्रीमदिति—श्रियानन्तचतुष्टयलक्ष्म्या युक्तस्य पार्श्वनाथपरमेश्वरस्य यश प्रकाशनपात्रे अहिच्छत्रनामनगरे चन्द्राननाख्या या अङ्गना नारी सा एव रति तस्या कुसुमचापस्य मदनस्य द्विषन्तपस्य तन्नामधेयस्य भूपते सोमदत्तो नाम पुरोहितोऽभूत् । कथभूत स उदितोदित-कुलशील प्रति पुरुषम् अधिकाधिकतया प्राप्तोदये उन्नति प्राप्ते कुलशीले वशसदाचारौ यस्य स षडङ्गे वेदे शिक्षा-कल्प-व्याकरण-निरुक्त-ज्योतिष-च्छन्दासि वेदस्य षडङ्गानि तदात्मके वेदे दैवे दैवविषये, निमित्ते अष्टाङ्ग-निमित्ते, दण्डनीत्या च अभिविनीतमति कुशलधी । दैवीना देवताप्रकोपजातानाम्, मानुषीणा मनुष्यैर-रिभिरुत्पादितानाम् आपदा प्रतिकर्ता निवारक, यज्ञदत्ताभट्टिनीभर्ता तन्नामधेयाया ब्राह्मण्या भर्ता पति, सोमदत्तो नाम पुरोहितोऽभूत् । एकदा तु सा किल यज्ञदत्ता अन्तर्वत्नी अन्त गर्भमध्यस्थम् अपत्य विद्यतेऽस्या इति गर्भिणीत्यर्थ, सती माकन्दमञ्जरीकर्णपूरेषु माकन्द आम्रतरु तस्य मञ्जर्या कर्णपूरेषु तन्नामकालङ्कारेषु तत्परिणतफलाहारेषु च समासादितदोहला लब्धेच्छावती अभूत् । व्यतिक्रान्तरसालवल्लरीफलकालतया व्यती-ताम्रमञ्जरीफलसमयत्वात्, कामितम् अभिलषित अनाप्तवती अलभमाना, शिफासु व्यथमाना प्रतानिनीव शिफासु मूलेषु पीडायुक्ता वल्लीव तनुतानव देहकार्श्य उपेयुषी जग्मुषी तेन पुरोहितेन ज्ञातिजनेन बन्धुगणेन च प्रबन्धेन आग्रहेण पृष्टा हृदयेष्ट मनोऽभिलाषम् अभाषिष्ट अब्रूत । भट्टस्तन्निशम्य श्रुत्वा "कथम् एतन्मनोरथम् अयथार्थपथम् अस्मन्मनोमथ अवग्रर्थप्रार्थन कथ करिष्यामि" एतन्मनोरथ अस्या यज्ञदत्ताया.

मन्मन इति—मम मन मन्मन तदेव वनम् अरण्य तस्य दाहे दहने दावपावक, दावोऽरण्य तस्य पावक अग्निरिव तत्मबोधनम्, नि स्निग्ध दुर्विदग्ध नष्टप्रीते दुर्विदग्ध खलचतुर, यदि चेत् इमं पुरोऽवस्थित दिगम्बरप्रतिच्छन्दं नग्नरूपम् अवच्छिद्य त्यक्त्वा, स्वच्छया निर्मलया इच्छया आगच्छ, नो चेत् गृहाण स्वीकुरु एनम् इमम् आत्मनो नन्दन पुत्रम्। इति व्याहृत्य भाषित्वा अस्य ऊर्ध्वज्ञो उत्थितकायोत्सर्गस्य भगवत-पुरत शिलातले बालकम् उत्सृज्य मुक्त्वा विजहार निज निवासम्। जगाम स्वकीयमावासम्। भगवानपि तेन मृतेन पुत्रेण दृषद शिलाया प्लोपोत्कर्षकलुषत्वात् प्लोपस्य दाहस्य उत्कर्ष तीव्रता तेन कलुषत्व श्यामीभूतता तस्मात्, विष्टरीकृतचरणवर्ग आमनोकृतपदयुग सोपसर्ग सोपद्रवः तथैव पूर्ववदेव अवतस्थौ तिष्ठति स्म।

[ पृष्ठ ८६ ] अत्रान्तरे अस्मिन् प्रसगे ( त्रिशङ्कुर्नाम खगपति भास्करदेवाय राज्यं दत्वा सयमी अजायत ) कथभूत स त्रिशङ्कुर्नप। विजयार्धोत्तरश्रेण्याममरावतीनगरीपति। कथभूतस्य विजयार्धपर्वतस्य। सहेति—सहचरै सखीजनै, अनुचरै दास्यादिभि. सह सचरन्त्यस्ता खेचर्य विद्याधराङ्गनास्तासा चरणाना पादानाम् अलक्तकेन यावकेन रक्तानि लोहितानि रम्प्राणि यस्य, तथाभूतस्य विजयार्ध इति वटीध्र पर्वत तस्य विजयार्धनटीध्रस्य, उत्तरश्रेण्याम्, कथभूतायाम्। दयितेति—दयितात् पत्यु अविदूरा समीपवर्तिनी या विद्याधरी खचराङ्गना तस्या विनोदेन नर्मभाषणेन विहारेण च परिमलिता सुगन्धीभूता कान्तारधरणी वनभूमि यस्या तस्याम् उत्तरश्रेण्याम् अमरावतीनगरीपरमेश्वर सुमङ्गलाभिधाना या अवला ललना तस्या वर भर्ता। कथभूत त्रिशङ्कुर्नृप। प्रकामेति—प्रकामं यथेप्सित निखाता राज्याच्च्याविताश्च ते अरातय शत्रवश्च तेपा कान्ता सुन्दर्य तासाम् आशयश्चित्त तत्र यः शोकजनने शङ्कुरिव शल्य इव त्रिशङ्कुर्नाम नृपति। समरेति—समरावसरे युद्धसमये अभिसरन्तोऽभिद्रवन्त ये सपत्ना शत्रवस्तेषा सतानो वशस्तस्य अवसान विनाश तत्करणे सारा वलीयास ये शिलीमुखा बाणा यस्य, तथाभूत स नृप राज्यसुखम् अनुभूय, जिनागमादवगतसंसारशरीरभोगवैराग्यस्थिति यति सार्वुर्बुभूपु, भूगोचरसचाराय भूमिविपये सचारो भ्रमणं यस्य तस्मै हेमपुरेश्वराय हेमपुराधीशाय कथभूताय। समस्तेति—समस्ता सकलाश्च ते महीशा राजान तै मान्य शासन यस्य तस्मै बलवाहननामधेयाय नृपाय सुदेवी सुताम्, ज्येष्ठाय पुत्राय च भास्करदेवाय च राज्यं प्रदाय वितीर्य सुप्रभसूरिसमीपे सयमी यतिरजायत। ततो गतेषु कतिपयेषु चिद्दिवसेषु विहित कृत राज्यापहारो यस्य। केन राज्यापहार कृत पुरदरदेवेन कथभूतेन। समुत्साहित. धनादिदानेन उन्नतिं नीत आत्मीयाना स्वसबन्धिना वीराणा समूहो येन तेन, पुन कथभूतेन। स्वदोरिति—निजभुजयोर्दर्पेण विद्या सामर्थ्ययुतसैन्यवृन्देन, दुर्विनीता दु शिक्षिता खलास्तेषु वरिष्ठेन ज्येष्ठेन लघिष्ठेन भ्राता पुरदरदेवेन विहितराज्यापहार परिजनेन सम स भास्करदेव तत्र बलवाहनपुरे अमरावतीपुरे शिविर स्वसैन्य सस्थाप्य मणिमालया राज्या सह त सोमदत्त भगवन्तम् उपासितु पूजयितुम् आगत। तत्पादमूले स्थलकमलमिव त बालकमवलोक्य 'अहो महदाश्चर्य महदद्भुतम्, यत कथमिदम् अरत्नाकरमपि रत्न रत्नाकरे समुद्रे अजातमपि रत्नमिव, अजलाशयमपि कुशेशय जलाशये तडागे अजातमपि कुशेशयमिव कमलमिव, अनिन्धनमपि तेज-पुञ्जम् इन्धनरहितमपि तेज.पुञ्जम् अङ्गकान्तिसहितम्, अचण्डकरमपि उग्रत्विप न चण्डा. तीक्ष्णा करा किरणा यस्य तथाभूतमपि उग्रत्विप तीव्रकान्तिम्। अनिलामातुलमपि कमनीयम् ( ? ) न इलामातुल अनिलामातुल इलामातुलश्चन्द्र इला चन्द्रस्य स्नुपा। चन्द्रस्तस्या मातुल इलामातुलश्चन्द्र स वज्रकुमारोऽचन्द्रोऽपि चन्द्रवत् कमनीय इति भाव। अपि च कथमय बालपल्लव इव पाणिस्पर्शेनापि म्लायमानलावण्य बालकिसलय इव करस्पर्शेनापि म्लायमान कान्तिहीन लावण्य सौन्दर्य यस्य तथाभूत। कठोरोष्मणि तीव्रातपतप्ते पाषाणे वज्ररचित इव रिरममानमानस क्रीडमानमना, मातुरुत्सगगत इव सुखेनास्ते जनन्या अङ्कगत इव आमोदेन वर्तते इति। एव कृतमतिर्विहितविमर्श स भास्करदेव "प्रियतमे वल्लभे कामम् अतिशयेन स्तनधयधृतमनोरथाया स्तन धयति पिबतीति स्तनधयो बाल तस्मिन्वृतो मनोरथोऽभिलापो यया सा तस्यास्तव अय भगवत सोमदत्तमुने प्रसादात् कृपाया सुमन्न लब्ध सर्वलक्षणोपपन्न सकलसामुद्रिकशुभलक्षणलक्षित वज्रकुमारो नाम

विहायश्चर्य विद्याधरस्त्रिय ताभि परिमलनेन मर्दनेन म्लानानि ग्लानि प्राप्तानि मृणालानि बिसानि कमलनालानि जलजानि च यत्र, पुन कथभूत स्थानम्। अशोकेति—अशोकतरो पल्लवाना शय्यासु दयितेन पत्या आसाद्य प्राप्य यद्विद्याधरीसुरत तस्य परिमलेन सुगन्धेन वहल विपुलम् इद लताकुञ्जस्थानम् इति निध्यायन्, पुनश्च कन्दुकेति—कन्दुकविनोद गेन्दुकक्रीडा तस्मिन् परिणतास्तत्परा या अम्बरचर्य खग्य तासा चरणालक्तकेन पादलिप्तयावकेन अङ्कित चिह्नितम् अद स्थानम्। तमालमूलानाम् आवलय मण्डल यत्र तथाभूतमिदम्। इद रमणीयम् मन्मनोहरमद, अदश्च सुन्दरम् अटनीध्रतट मेखलाधरतटस्थान मनोहरम्। इति निध्यायन् पश्यन् चिन्तयन् वा। समेत्ति—समाचरित विहित स्वैरविहारो येन, पुन. प्राप्तो हिमवद्गिरे प्राग्भार अग्रभागो येन स। वज्रकुमार मायाजगरेण निगीर्णां विद्याधरकन्या पवनवेगा सरक्षितवान्। [ कस्य विद्याधरपतेरिय पवनवेगेति वर्ण्यते ] खेचरीति—खेचरीलोचनाना चन्द्रवदाह्लादकस्य चन्द्रपुरेति नगरस्येन्द्र स्वामी, यश्च अङ्गवती युवत्या प्रीतेर्धाम गृह तस्य गरुडवेगनाम्न विद्याधरपते अतिशयरूपस्य पात्री भाजनभूता प्रियपुत्री पवनवेगा नाम असगा सख्यादिपरिवाररहिताम्। प्रालेयेति—प्रालेय हिम तेन उपलक्षित अचल पर्वत हिमाभिध शैल तस्य मेखलाया नितम्बे यत्खलतिक नाम वन तस्य लतालये निलीनाङ्गा निलीन स्थितम् अङ्ग यस्या सा ताम्। पुन कथभूता ता बहुरूपिणो इति नाम्न. निषद्या स्थापना यस्या सा ताम् अनवद्या निर्दोषा विद्यामाराधयन्तीम्, अनयैव विघ्ननिघ्नया विघ्न कुर्वत्या जात अजगररूप यस्या तथाभूतया विद्यया निगीर्णवदना निगीर्ण गिलित वदन मुख यस्यास्ताम् उपलक्ष्य दृष्ट्वा परोपकारचतुर तार्क्ष्यविद्यया गरुडविद्यया एतस्या लपन मुख तेन आविल भूत तालु यस्य त मायाशयालु मायाजगर विश्रासयामास पीडयामास। पवनवेगा तत्प्रत्यूहाभोगापगमानन्तरमेव तस्य मायाजगरस्य प्रत्यूहो विघ्नस्तस्याभोगो विस्तार तस्य अपगमो विनाशस्तस्य अनन्तरमेव विघ्ननाशक्षण एव विद्याया सिद्धि प्रपद्य प्राप्य 'अवश्य इह जन्मनि अयमेव मे कृतप्राणत्राणावेश कृत विहित प्राणत्राणस्य असुरक्षणस्य आवेश प्रयत्नो येन स वज्रकुमार एव प्राणेश प्राणनाथ' इति चेतसि अभिनिविश्य निश्चय कृत्वा पुन अस्यैव नीहारमहीधरस्य नीहारो हिम तस्य महीधर पर्वत हिमाचल तस्य नितान्तम् अतिशयेन तीरिणीपर्यन्ते नद्यास्तटे सूर्यप्रतिमाम् आतापनयोग श्रितवत धृतवत. भगवत पूज्यस्य। तप इति—तपोमाहात्म्येन कृतसकलप्राणिव्यसननाशस्य सयतस्य सयमिनो मुने पादपीठोपकण्ठे चरणासनसमीपे पठत तत्र सेत्स्यति सिद्धि यास्यति इत्युपदेशवशेन अभिनवमाराय अभिनवो नूतन स चासौ मारो मदन तस्मै वज्रकुमाराय गगनेति–गगने गमन येपा तेपा विद्याधराणा या अङ्गना स्त्रिय, तासा विद्याधरस्त्रीणा जीवितभूताम् अभिमतेति–अभिमत अभिलपित स चासौ अर्थश्च तस्य साधने पर्याप्ति पूर्णता यस्यास्ता प्रज्ञप्ति विद्या वितीर्य दत्त्वा, निजनगर्यां पर्यटन् वज्रकुमार तथैव तत्सूरिसमक्ष फेनमालिनीनदीतटे विद्या प्रसाध्य असाध्यसाधनेन प्रवृद्धविक्रम अक्रमेति—अक्रमेण अन्याय्येन विक्रमेण शौर्येण अल्पीभूतदेव पुरदरदेव पितृव्य पितुर्भ्रातरम् अव्याजम् अनिमित्तम् उच्छिद्य सद्यस्तत्क्षण एव ता विजयोत्सवपरम्परावतीम् अमरावती पुर नगरीम् आत्मपितर स्वतातम् अखिलगगनचरै विहितपादसेव भास्करदेव स्थापयित्वा वश्येन्द्रिय स्वयवरनिमित्तेन कृताभिलपितवल्लभसमागमाम्, मदनसमागमसजातशृङ्गारसुन्दरा पवनवेगाम् अन्याश्च खेचरपतिकन्या परिणीय भाग्यवता धुर्य नभोगामिन सकल्पमात्रलब्धैस्तैस्तै अलब्धपूर्वैर्विलासै समय गमयामास।

[ पृष्ठ ८६ ] अन्यदा पुन इष्टा अभिप्रेता सुहृदादयस्तेपाम् प्रज्ञया तया दुष्टा मत्सरिण ये ज्ञातय गोमिणो जना तेपा अवज्ञया अवहेलनेन आत्मन स्वस्य परैधित्व परेण एधित्व वर्द्धन पोपण च अवबुध्य ज्ञात्वा निजान्वयनिश्चये स्ववशनिर्णये सति शारीरेपु उपचारेपु स्नानान्नपानादिव्यवहारेपु प्रवृत्तिरन्यथा निवृत्ति इति विहितप्रतिज्ञ। ताभ्या मातापितृभ्या महेति—महान्तश्च ते मुनय महामुनय सप्तर्षय तेपा माहात्म्ययुक्त प्रभावसपन्न यो मन्त्र तेन विश्रामिना भय प्रापिता दुष्टा ईतय रोगादिबाधा ता एव निशाचरा राक्षसा यत्र तथाभूताया मथुराया तपस्यत सोमदत्ताख्य भगवत सनीडे समीपे नीत। तदङ्गमुद्राप्राय मुनिशरीराकृतितुल्यम् आत्मकाय स्वदेहम् अवसाय निश्चित्य नजातानन्दनिकाय उद्भूतप्रमोदवृन्द तौ

विहायश्चर्य विद्याधरस्त्रिय ताभि परिमलनेन मर्दनेन म्लानानि ग्लानि प्राप्तानि मृणालानि बिसानि कमलनालानि जलजानि च यत्र, पुन कथभूत स्थानम्। अशोकेति—अशोकतरोः पल्लवाना शय्यासु दयितेन पत्या आसाद्य प्राप्य यद्विद्याधरीसुरत तस्य परिमलेन सुगन्धेन वहल विपुलम् इद लताकुञ्जस्थानम् इति निध्यायन्, पुनश्च कन्दुकेति—कन्दुकविनोद गेन्दुकक्रीडा तस्मिन् परिणतास्तत्परा या अम्बरचर्य खग्य तासा चरणालक्तकेन पादलिप्तयावकेन अङ्कित चिह्नितम् अद स्थानम्। तमालमूलानाम् आवलय मण्डल यत्र तथाभूतमिदम्। इद रमणीयम् मन्मनोहरमद, अदश्च सुन्दरम् अटनीध्रतट मेखलावरतटस्थान मनोहरम्। इति निध्यायन् पश्यन् चिन्तयन् वा। समेति—समाचरित. विहित स्वैरविहारो येन, पुन प्राप्तो हिमवद्गिरे प्राग्भार अग्रभागो येन स। वज्रकुमार मायाजगरेण निगीर्णा विद्याधरकन्या पवनवेगा सरक्षितवान्। [ कस्य विद्याधरपतेरिय पवनवेगेति वर्ण्यते ] खेचरीति—खेचरीलोचनाना चन्द्रवदाह्लादकस्य चन्द्रपुरेति नगरस्येन्द्र स्वामी, यश्च अङ्गवती युवत्या प्रीतेर्धाम गृह तस्य गरुडवेगनाम्न विद्याधरपते. अतिशयरूपस्य पार्श्वे भाजनभूता प्रियपुत्री पवनवेगा नाम असगा सखयादिपरिवाररहिताम्। प्रालेयेति—प्रालेय हिम तेन उपलक्षित अचल पर्वत हिमाभिध शैल तस्य मेखलाया नितम्बे यत्खलतिक नाम वन तस्य लतालये निलीनाङ्गा निलीन स्थितम् अङ्ग यस्या सा ताम्। पुन कथभूता ता वहुरूपिणी इति नाम्न निषद्या स्थापना यस्या सा ताम् अनवद्या निर्दोषा विद्यामाराधयन्तीम्, अनयैव विघ्ननिघ्नया विघ्न कुर्वत्या जात अजगररूप यस्या तथाभूतया विद्यया निगीर्णवदना निगीर्ण गिलित वदन मुख यस्यास्ताम् उपलक्ष्य दृष्ट्वा परोपकारचतुर तार्क्ष्यविद्यया गरुडविद्यया एतन्म्या लपन मुख तेन आविल भूत तालु यस्य त मायाशयालु मायाजगर वित्रासयामास पीडयामास। पवनवेगा तत्प्रत्यूहाभोगापगमानन्तरमेव तस्य मायाजगरस्य प्रत्यूहो विघ्नस्तस्याभोगो विस्तार. तस्य अपगमो विनाशस्तस्य अनन्तरमेव विघ्ननाशक्षण एव विद्याया सिद्धि प्रपद्य प्राप्य 'अवश्य इह जन्मनि अयमेव मे कृतप्राणत्राणावेश कृत विहित प्राणत्राणस्य असुरक्षणस्य आवेश. प्रयत्नो येन स वज्रकुमार एव प्राणेश प्राणनाथ' इति चेतसि अभिनिविश्य निश्चय कृत्वा पुन अस्यैव नीहारमहीधरस्य नीहारो हिम तस्य महीधर पर्वत. हिमाचल तस्य नितान्तम् अतिशयेन तोरिणीपर्यन्ते नद्यास्तटे सूर्यप्रतिमाम् आतापनयोग श्रितवत धृतवत भगवत पूज्यस्य। तप इति—तपोमाहात्म्येन कृतमकलप्राणिव्यसननाशस्य सयतस्य सयमिनो मुने पादपीठोपकण्ठे चरणासनसमीपे पठत तत्र सेत्स्यति सिद्धि यास्यति इत्युपदेशवशेन अभिनवमाराय अभिनवो नूतन स चासौ मारो मदन तस्मै वज्रकुमाराय गगनेति—गगने गमन येषा तेषा विद्याधराणा या अङ्गना स्त्रिय तासा विद्याधरस्त्रीणा जीवितभूताम् अभिमतेति—अभिमत अभिलषित स चासौ अर्थश्च तस्य साधने पर्याप्ति पूर्णता यस्यास्ता प्रज्ञप्ति विद्या वितीर्य दत्त्वा, निजनगर्यां पर्यटन् वज्रकुमार तथैव तत्सूरिसमक्ष फेनमालिनीनदीतटे विद्या प्रसाध्य असाध्यसाधनेन प्रवृद्धविक्रम अक्रमेति—अक्रमेण अन्याय्येन विक्रमेण शौर्येण अल्पीभूतदेव पुरदरदेव पितृव्य पितुर्भ्रातरम् अव्याजम् अनिमित्तम् उच्छिद्य सद्यस्तत्क्षण एव ता विजयोत्सवपरम्परावतीम् अमरावती पुर नगरीम् आत्मपितर स्वतातम् अखिलगगनचरै विहितपादसेव भास्करदेव स्थापयित्वा वश्येन्द्रिय स्वयवरनिमित्तेन कृताभिलषितवल्लभसमागमाम्, मदनसमागमसजातशृङ्गारसुन्दरा पवनवेगाम् अन्याश्च खेचरपतिकन्या परिणीय भाग्यवता धुर्य नभोगामिन सकलसमाप्तलब्धैस्तैस्तै अलब्धपूर्वैर्विलासै समय गमयामास।

[ पृष्ठ ८६ ] अन्यदा पुन इष्टा अभिप्रेता सुहृदादयस्तेषाम् प्रज्ञया तया दुष्टा मत्सरिण ये ज्ञातय गोत्रिणो जना तेषा अवज्ञया अवहेलनेन आत्मन स्वस्य परैधित्व परेण एधित्व वर्द्धन पोषण च अवबुध्य ज्ञात्वा निजान्वयनिश्चये स्ववशनिर्णये सति शारीरेषु उपचारेषु स्नानान्नपानादिव्यवहारेषु प्रवृत्तिरन्यथा निवृत्ति इति विहितप्रतिज्ञ। ताभ्या मातापितृभ्या महेति—महान्तश्च ते मुनय महामुनय सप्तर्षय तेषा माहात्म्ययुक्त प्रभावसम्पन्न यो मन्त्र तेन वित्रासिता भय प्रापिता दुष्टा ईतय रोगादिबाधा ता एव निशाचरा राक्षसा यत्र तथाभूताया मथुराया तपस्यत सोमदत्ताख्य भगवत मनीडे समीपे नीत। तदङ्गमुद्राप्राय मुनिशरीराकृतितुल्यम् आत्मकाय स्वदेहम् अवमाय निश्चित्य सजातानन्दनिकाय उद्भूतप्रमोदवृन्द तौ

वर्तते एव वदन् एष वादी मद्यमातृसमागमौ ईहताम् इच्छतु । यथा स्त्रीत्वं पत्न्यां विद्यते तथैव जनन्यामपि अतो भार्यासमागममिव जननीसमागमोऽपि वादिनेष्येत । यथा जले पेयत्वसामान्यं वर्तते तथा मद्येऽपि वर्तते अतो जलवन्मदिरापि पीयतां वादिना परं तेन मदिरा त्यज्यते जलं पीयते । स्त्री सेव्यते माता वन्द्यते अतः पेयत्वं स्त्रीत्वं च सर्वत्र समानं नैव भवेत् ॥३०३॥ शुद्धेति—शुद्धं दुग्धं न गोमांसम् । एकस्या एव गोर्दुग्धं शुद्धं सेव्यं भवति परं तस्या मांसम् अशुद्धत्वात् सेव्यं नैव भवति । एतादृशः पदार्थस्वभाववैचित्र्यं वर्तते । आहेयम् अहेः सर्पस्य इदम् आहेयं सर्पमस्तकस्थितं सर्पमस्तके स्थितं रत्नं विषम् अपहरति । परं तद्दन्तस्थितं विषं विपदे मरणाय स्यात् ॥३०४॥

[ पृष्ठ १३९ ] अथवा—हेयमिति—कारणे समे सत्यपि मांसं त्याज्यं पयः दुग्धं पेयम् । धेन्ववयवत्वसाम्येऽपि मांसं हेयं न दुग्धम् । विषतरोः पत्रम् आयुषे जीवनकारणं भवति परं तन्मूलं मृतये मरणाय स्यात् । विषतर्ववयवसमत्वेऽपि पत्रं भक्ष्यं भवति न मूलमिति ॥३०५॥ अपि च—शरीरेति—शरीरावयवत्वेऽपि मांसे दोषः तद्भक्षणं निन्द्यम्, न सर्पिषि घृते न दोषोऽनस्तद्भक्षणीयम् । द्विजातिषु जिह्वाया मद्यं दोषाय भवति । पादे मद्यं द्विजातिषु ब्राह्मण-क्षत्रिय-वैश्येषु न दोषाय भवति ॥३०६॥ विधिरिति—सम्प्रोक्षणं यज्ञादिश्चेद् विधिः शुद्ध्यै भवति तर्हि द्विजैः सर्वं भुज्यताम् तत्र मांसादिकं हेयम्, ओदनादिकं भोज्यम् इत्याग्रहो न विधेयः । केवलं वस्तु शुद्ध्यै चेत् अन्नादिकम्, यत्र अन्नादिकं शुद्धं लभ्येत तत्र तद्ग्राह्यमिति मन्यते चेत् श्वपचालये मातङ्गगृहे भुज्यताम् । अतः केवलं विधिना अन्नादेः दातुः पात्रस्य च शुद्धिर्भवतीति न मन्तव्यम् । यदि अन्नं शुद्ध्यै भवेत् तर्हि तेनान्नेन दाता पात्रमपि शुद्धं भवेत् । ततश्च तच्छुद्धं यत्र कुत्रापि मातङ्गगृहेऽपि लभ्येत तद्ग्रहणे दोषो न स्यात् । अतः केवलया अन्नशुद्ध्या भाव्यमिति न । तर्हि कया शुद्ध्या विधिशुद्धिः स्यादिति प्रश्ने आह—॥३०७॥ तद्द्रव्येति—तस्मात् द्रव्यदातृपात्राणां विशुद्धौ द्रव्यशुद्धौ सत्यां, दातृशुद्धौ सत्यां, पात्रशुद्धौ च सत्यां विधिशुद्धता भवति । द्रव्यादीनाम् अशुद्धौ केवलं विधिशुद्ध्या पर्याप्तिः स्यात् इति न मन्तव्यम् । केवलं द्रव्यशुद्ध्यापि पर्याप्तता न सम्भवति, केवलं दातृशुद्ध्यापि सा न भवति अतः द्रव्यदातृपात्रशुद्ध्या सहिता विधिशुद्धता विशुद्धं फलं जनयतीति ज्ञेयम् । अशुद्धोऽपि दाता शुद्धो भवेदिति चेदुच्यते—यत्संस्कारशतेनापि नाजातिर्द्विजतां व्रजेत् । संस्कारशतेनापि द्विजान्मुक्त्वा अन्यो अजातिः शूद्रो जनः द्विजतां न व्रजेत् । गर्भजन्म सत्कुले जन्म दीक्षायोग्ये कुले जन्म यस्य तस्यैव संस्कारजन्म भवति स एव संस्कारजन्मना द्विजतां गच्छति । संस्कारहीनो द्विजः जात्या द्विजो भवति । स नामधारको द्विजो ज्ञेयः । यस्य सत्कुले जन्म न स संस्कारशतेनापि अजातिरेव नामधारकाद् द्विजादपि स हीन एव । किरणाकुलोऽपि काचः असंस्कृतमणेरपि समानतां न याति कथं संस्कृतमणेः समतां स बिभृयात् ॥३०८॥ तच्छाक्येति—तस्मात् शाक्यानां बौद्धानां सांख्यानां पञ्चविंशतितत्त्ववादिनां कापिलानाम्, चार्वाकाणां बृहस्पतिशिष्याणां नास्तिकानाम्, वेदवादिनां मीमांसकानाम्, वैद्यानाम्, कपर्दिनां कापालिकानां मतं विहाय श्रेयोऽर्थिभिः मुक्तिकामैः सदा मांसं हातव्यम् आजन्म मांसत्यागो विधेयः ॥३०९॥ यस्तु इति—यो जनः लौल्येन जिह्वालाम्पट्येन मांसाशी मांसम् अश्नाति भक्षयति, तेन मांसभक्षणेन तथा यज्ञे प्राणिवधेन धर्मो वर्धते इति च मन्यते स द्विपातकः ज्ञेयः । हिंसां धर्मं मन्यमानः मांसं च भुञ्जानः देवान् मांसं प्रीणयतीति मिथ्या सङ्कल्पयन् द्विपातको भवति । यथा मात्रा सह परदाराक्रियाकारी नरः मातृगमनपातकं परस्त्रीसेवनपातकं च कुरुते ॥३१०॥

[ पृष्ठ १४०-१४२ ] श्रूयतामत्र मांसाशनाभिध्यानमात्रस्यापि पातकस्य फलम्—मांसभक्षणसंकल्पमात्रस्यापि पापस्य फलं दृष्टान्तद्वारेण कथयति सूरिः सुदत्ताचार्यः तच्छ्रूयतामाकर्ण्यताम्—श्रीमदिति—श्रीः अस्यास्तीति श्रीमान् स चासौ पुष्पदन्तः श्रीमत्पुष्पदन्तः नवमो जिनपतिः स एव भदन्तः भव्यजनकल्याणविधायी ऋषिः तस्य अवतारे जन्मसमये अवतीर्णः स्वर्गात्समागतो यस्त्रिदिवपतिः स्वर्गनाथः सौधर्मेन्द्रः तेन सम्पादितो विहितो विधापितश्च यः उद्योतः उत्सवः तस्य या इन्दिरा लक्ष्मीस्तस्यै आसन्दी आसनभूता या काकन्दीपुरी तस्यां चार्वाकवशोद्भवः सौरसेनो नाम भूपतिः कुलधर्मानुरोधबुद्ध्या निजवंशधर्मानुसरणमत्या, गृहीतपिशितव्रतः अङ्गीकृतमांसत्यागः । पुनर्वेदवैद्याद्वैतमोहितमतिः श्रुतिविपर्यासितमतिः वैद्यविपर्यासितप्रज्ञः अद्वैतमतपरावर्तितमतिश्च, संजातजाङ्गलजिघत्सानुमतिः उत्पन्नमांसबुभुक्षानुसृतबुद्धिः । अङ्गीकृतवस्तुनिर्वहणात् जनापवादाज्जुगुप्समानः ।

## २५. मांसनिवृत्तिफलाख्यानो नाम पञ्चविंशतितमः कल्पः

[ पृ० १४२-१४३ ] श्रूयतामत्र मासनिवृत्तिफलस्योपाख्यानम्—चण्डमातङ्गस्य कथा—अवन्तिमण्डलेति—अवन्तयश्च ते मण्डलाश्च अवन्तिमण्डलास्त एव नलिन कम तस्मिन्नभिनिवासे सरसी रसयुक्ता या एकानसीनाम पुरी तस्या पुरवाहिरिकाया तस्या पुरो वाह्यप्रदेशे। देविलेति—देविला नामो महिला पत्नी देविलाख्या पत्नी तस्या विलासा एव विशिखा वाणास्तेषा वृत्या सवन्धेन कोदण्डस्य धनु सदृशस्य चण्डनाम्नो मातङ्गस्य एकस्या दिशि। निवेशितेति—निवेशित स्थापित पिशित मासम् उपदशश्च तद्राचकभक्ष्यद्रव्य च येन तस्य। अपरस्या दिशि। विन्यस्तेति—विन्यस्त स्थापित सुरया मदिरया सभृत पूर्ण कलशो येन तस्य। पुन कथभूतस्य चण्डमातङ्गस्य पलोपदशोदारा सुरा मासभक्षणे रुच्युत्पादकरूपाम् उदारा विपुला सुरा पाय पाय पीत्वा पीत्वा तदुभयान्तराले तयोरुभययो अन्तराले मध्य चर्मनिर्माणतन्त्रा चर्मणा निर्माण रचना तदेव तन्त्र हेतुर्यस्या ता वरत्रा वर्ध्री वर्तयत रचयत चण्डमातङ्गस्य। वियदिति—वियति आकाशे विहारो भ्रमण तदर्थम् उड्डीन उत्पतन कुर्वाण अण्डजडिम्भ पक्षिशिशु तस्य तुण्डेन मुखेन यत्खण्डन तस्मात्। विनिष्यन्दि स्रवत यद्विषवरविष सर्पविष तस्य दोषस्यावसरो यत्र तथाभूता सुराभवत्। सर्पविषविन्दो पतनात्सविषा मदिरा जातेति भाव। अत्रैवावसरे अस्मिन्नेव प्रस्तावे तत्समीपवर्तमगोचरे चण्डमातङ्गनिवासस्य समीपमेव मार्गे धर्मेति—धर्मश्रवणम्, जन्मान्तरादिप्रकटनम् इत्याद्युपाययुक्ताभि कथाभि विनेयजना शिष्यास्तेपामुपकाराय कृतेति—कृत. उत्पन्ना कामचार इच्छा तेन प्रचारो भ्रमण यस्य, पुन कथभूतम् ऋषियुगलम्। मूर्तिमदिति—मूर्तिमत् सदेह स्वर्गमोक्षमार्गयुग्ममिव अम्बरात् आकाशात् अवतरत् अध. आगच्छत् ऋषियुग्मम् अवलोक्य सजातकुतूहल उत्पन्नविस्मय। त देशं मुनिप्रदेशम् अनुसृत्य नगरे मुनिवरावलोकनात् श्रावकलोक व्रतानि समाददान गृह्णन्तम् अनुस्मृत्य ज्ञात्वा। समाचरितप्रणाम विहितवन्दन। सुनन्दमुनेः अग्रेसरगमनम् अभिनन्दन भगवन्तम् आत्मोचित व्रतमयाचत। भगवान्। उपकारायेति—पर्जन्य इव यथा मेघवृष्टि सर्वस्य उपकाराय तथा धार्मिक सर्वस्य उपकाराय हितोपदेशेषु प्रवर्तते। यथा मेघवृष्टे स्थानास्थानचिन्ता नास्ति तथा हितोक्तिषु अपि धार्मिकस्य सा न भवति ॥३१२॥ इत्यवगम्य ज्ञात्वा सम्यगिति—सम्यक् सम्यग्दर्शनयुक्त यदवधिज्ञान तस्योपयोगात् अवगत ज्ञात एतस्य चण्डमातङ्गस्य आसन्नपरासुतायोग आसन्न समीप परासुताया मरणस्य योग सवन्ध येन स भगवान्स्वार्णपि त मातङ्गमेवम् अवोचत्। 'अहो मातङ्ग, तदुभयान्तरालसज्जा रज्जू भिन्नदिशो स्थितयो पिशितसुराकुम्भयोरन्तराले मध्ये सज्जा स्थिता रज्जू वरत्रा सृजत निर्मिमाणस्य तन्मध्ये तव तन्निवृत्तिव्रतम् तयो पलसुरयोस्त्यागस्य व्रतम्' इति मातङ्गस्तथा प्रतिपद्य स्वीकृत्य तम् अवकाश तत्स्थानम् उपसद्य प्राप्य पिशित प्राश्य भक्षयित्वा यावदहम् इद स्थानक नायामि यावत् कालम् अहम् एतत्स्थान प्रदेश नायामि नागच्छामि तावन्मेऽस्य पिशितस्य निवृत्तिस्त्याग। इत्यभिधाय समासादितमदिरास्थान लब्धसुराकलशप्रदेश प्रतिपन्नपान पीतसुर। तदुग्रतरगरभरात् तस्य विषभरस्य उग्रतर तीव्रतर यत् गर विष तस्य भरात्प्रभावात् लघूल्लङ्घितमतिप्रसर लघु शीघ्रम् उल्लघित विनष्ट मतिप्रसर चेतनाविलास यस्य। विषवेगान्मूर्च्छितस्येत्यर्थ तन्निवृत्ति मद्यमासयो निवृत्ति त्यागम् अलभमानचित्तोऽपि अप्राप्तमानसोऽपि प्रेत्य मृत्वा तावन्मात्रव्रतमाहात्म्येन स्तोककाल यावद्गृहीतव्रतप्रभावेन यक्षकुले यक्षमुख्यत्व प्रतिपेदे प्राप। भवति चात्र श्लोक —चण्डेति—अवन्तिषु देशेषु चण्डो मातङ्ग अत्यल्पकालभाविन्या अतिस्तोकसमयसजाताया पिशितस्य निवृत्तेः मासस्य त्यागात् यक्षमुख्यता प्राप यक्षाणा व्यन्तरदेवविशेषाणाम् अग्रणीर्महर्द्धिकोऽभवत् ॥३१३॥

इत्युपासकाध्ययने मासनिवृत्तिफलाख्यानो नाम पञ्चविंशतितम' कल्प ॥२५॥

## २५. मांसनिवृत्तिफलाख्यानो नाम पञ्चविंशतितमः कल्पः

[ पृ० १४२-१४३ ] श्रूयतामत्र मासनिवृत्तिफलस्योपाख्यानम्—चण्डमातङ्गस्य कथा—अवन्तिमण्डलेति—अवन्तयश्च ते मण्डलाश्च अवन्तिमण्डलास्त एव नलिन कम तस्मिन्नभिनिवासे सरसी रसयुक्ता या एकानसीनाम पुरी तस्या पुरबाहिरिकाया तस्या पुरो बाह्यप्रदेशे। देविलेति–देविला नामो महिला पत्नी देविलाख्या पत्नी तस्या विलासा एव विशिखा बाणास्तेषा वृत्त्या सबन्धेन कोदण्डस्य धनु सदृशस्य चण्डनाम्नो मातङ्गस्य एकस्या दिशि। निवेशितेति–निवेशित स्थापित पिशित मासम् उपदशश्च तद्राचकभक्ष्यद्रव्य च येन तस्य। अपरस्या दिशि। विन्यस्तेति–विन्यस्त स्थापित सुरया मदिरया सभृत पूर्ण कलशो येन तस्य। पुन कथभूतस्य चण्डमातङ्गस्य पलोपदशोदारा सुरा मासभक्षणे रुच्युत्पादकरूपाम् उदारा विपुला सुरा पाय पायं पीत्वा पीत्वा तदुभयान्तराले तयोरुभययो अन्तराले मध्य चर्मनिर्माणतन्त्रा चर्मणा निर्माण रचना तदेव तन्त्र हेतुर्यस्या ता वरत्रा वद्ध्री वर्तयत रचयत चण्डमातङ्गस्य। वियदिति–वियति आकाशे विहारो भ्रमण तदर्थम् उड्डीन उत्पतन कुर्वाण अण्डजडिम्भ पक्षिशिशु तस्य तुण्डेन मुखेन यत्खण्डन तस्मात्। विनिष्यन्दि स्रवत् यद्विषधरविष सर्पविष तस्य दोषस्यावसरो यत्र तथाभूता सुराभवत्। सर्पविषबिन्दो पतनात्मविषा मदिरा जातेति भाव। अत्रैवावसरे अस्मिन्नेव प्रस्तावे तत्समीपवर्त्मगोचरे चण्डमातङ्गनिवासस्य समीपमेव मार्गे धर्मेति–धर्मश्रवणम्, जन्मान्तरादिप्रकटनम् इत्याद्युपाययुक्ताभि कथाभि विनेयजना शिष्यास्तेषामुपकाराय कृतेति–कृत. उत्पन्ना कामचार इच्छा तेन प्रचारो भ्रमण यस्य, पुन कथभूतम् ऋषियुगलम्। मूर्तिमदिति—मूर्तिमत् सदेह स्वर्गमोक्षमार्गयुग्ममिव अम्बरात् आकाशात् अवतरत् अध आगच्छत् ऋषियुग्मम् अवलोक्य सजातकुतूहल उत्पन्नविस्मय। त देश मुनिप्रदेशम् अनुसृत्य नगरे मुनिवरावलोकनात् श्रावकलोकं व्रतानि समाददान गृह्णन्तम् अनुस्मृत्य ज्ञात्वा। समाचरितप्रणाम विहितवन्दन। सुनन्दमुने. अग्रेसरगमनम् अभिनन्दन भगवन्तम् आरमोचित व्रतमयाचत। भगवान्। उपकारायेति–पर्जन्य इव यथा मेघवृष्टि सर्वस्य उपकाराय तथा धार्मिक सर्वस्य उपकाराय हितोपदेशेषु प्रवर्तते। यथा मेघवृष्टे स्थानास्थानचिन्ता नास्ति तथा हितोक्तिषु अपि धार्मिकस्य सा न भवति ॥३१२॥ इत्यवगम्य ज्ञात्वा सम्यगिति–सम्यक् सम्यग्दर्शनयुक्त यदवधिज्ञान तस्योपयोगात् अवगत ज्ञात एतस्य चण्डमातङ्गस्य आसन्नपरासुतायोग आसन्न समीप परासुताया मरणस्य योग सबन्ध येन स भगवाञ्चारणपि त मातङ्गमेवम् अवोचत्। 'अहो मातङ्ग, तदुभयान्तरालसज्जा रज्जू भिन्नदिशो स्थितयो पिशितसुराकुम्भयोरन्तराले मध्ये सज्जा स्थिता रज्जू वरत्रा सृजत निर्मिमाणस्य तन्मध्ये तव तन्निवृत्तिव्रतम् तयो पलसुरयोस्त्यागस्य व्रतम्' इति मातङ्गस्तथा प्रतिपद्य स्वीकृत्य तम् अवकाश तत्स्थानम् उपसद्य प्राप्य पिशित प्राश्य भक्षयित्वा यावदहम् इद स्थानक नायामि यावत् कालम् अहम् एतत्स्थान प्रदेश नायामि नागच्छामि तावन्मेऽस्य पिशितस्य निवृत्तिस्त्याग। इत्यभिधाय समासादितमदिरास्थान लब्धसुराकलशप्रदेश प्रतिपन्नपान पीतसुर। तदुग्रतरगरभरात् तस्य विषधरस्य उग्रतर तीव्रतर यत् गर विष तस्य भरात्प्रभावात् लघूल्लङ्घितमतिप्रसर लघु शीघ्रम् उल्लघित विनष्ट मतिप्रसर चेतनाविलास यस्य। विषवेगान्मूर्च्छितस्येत्यर्थ तन्निवृत्ति मद्यमासयो निवृत्ति त्यागम् अलभमानचित्तोऽपि अप्राप्तमानसोऽपि प्रेत्य मृत्वा तावन्मात्रव्रतमाहात्म्येन स्तोककाल यावद्गृहीतव्रतप्रभावेन यक्षकुले यक्षमुख्यत्व प्रतिपेदे प्राप। भवति चात्र श्लोक —चण्डेति—अवन्तिषु देशेषु चण्डो मातङ्ग अत्यल्पकालभाविन्या अतिस्तोकसमयसजाताया पिशितस्य निवृत्तित मासस्य त्यागात् यक्षमुख्यता प्राप यक्षाणा व्यन्तरदेवविशेषाणाम् अग्रणीर्महर्द्धिकोऽभवत् ॥३१३॥

इत्युपासकाध्ययने मासनिवृत्तिफलाख्यानो नाम पञ्चविंशतितम' कल्प ॥२५॥

इच्छानिरोध तस्य परिवृद्धये समन्तादुपचयाय। व्रतबीजवृतिक्रिया बीजस्येव व्रतानाम् आवेष्टकक्रिया रक्षोपाया येषु ते अन्तराया सन्ति ॥३२४॥ अहिंसाव्रतेति—अहिंसाव्रतस्य पालनार्थम्। मूलव्रतानाम् अष्टमूलगुणाना विशुद्धये अतिचाररहितत्वाय निशाया भुक्ति भोजन वर्जयेत् परिहरेत्। यत सा इहामुत्र दु खदायिनी भवति ॥३२५॥ आश्रितेष्विति—सर्वेषु आश्रितेषु मनुष्येषु पक्षिषु पशुषु च अनन्यस्वामिकेषु। यथावद्विहितस्थिति यस्य येन अन्नादिना शरीरपोषण स्यात् तेन तस्य तथा करणीयम्। एवम् आश्रिताना भरण विधाय शारीरे अवसरे आहारग्रहणसमये स्वय गृहाश्रमी गृहस्थ समीहित यत्न कुर्यात् ॥३२६॥ सधानमिति—यत्र रसकायिका जीवा अनन्तशो जायन्ते तत्सधानकम्। पानक दधिगुडचातुर्जातकादिद्रव्योद्भवम। धान्य शाल्यादिकम्। पुष्प कुसुमम्। मूल वृक्षवल्ल्यादे पादा, दल पत्रम्। यद् यद् जीवयोनि जीवस्य यदुत्पत्तिस्थान तत् न सग्राह्यम्। यच्च जीवैरुपद्रुत कीटकै उपद्रुत छिद्रित तत् न सग्राह्यम् ॥३२७॥ अमिश्रमिति—अन्येन अन्नादिना मिश्रणम् अकृतमपि कालाश्रयेण वर्षाकालाद्यवलम्बनेन उत्सर्गे ग्राह्यमपि किंचिद्वस्तु जीवयोनित्वात् जीवैरुपद्रुतत्वाद्वा जिनागमे त्याज्य भवति। किंचिद्वस्तु शीतोष्णादिदेशाश्रयेण, किंचिद्वस्तु जीर्णादि पुष्पितादिदशाश्रयेण प्रागुत्सर्गे सदपि जिनागमे त्याज्य भवति। किंचिद्वस्तु मिश्रमपि कालदेशदशा अवलम्ब्य अग्राह्य भवति ॥३२८॥ यदन्त इति—यस्य अन्त मध्ये सुषिर छिद्र प्राय बहुश वर्तते तन्नालीनलादि कमलनाल नलादि देवनालवेत्रादिक मृदु वेण्वादिक हेय त्याज्यम्, तत्सुषिरे त्रसजीवानाम् आगन्तुकाना सभवात्। तथा अनन्तकायिकप्रायम् अनन्तजीवाना शरीर यद्भवति तदनन्तकायिक प्राय बहुश अनन्तकायिकतुल्य च यद्बहुजीवनिचित त्रसजीवसकीर्ण च भवति तद्वल्लीकन्दादिक त्यजेत्। या वल्ली कोमला विद्यते, तस्या किसलयवृन्तादिक कोमलम् अनन्तकायिक च भवति अतस्तत् व्रतिभिर्हेयम्। कन्दादिक च पलाण्डुसूरणादिक च बहुतराणा तदाश्रितजीवानाम् आश्रयस्थानत्वात् त्याज्यम्। अन्यथा तद्भक्षणेन जिह्वेन्द्रियप्रीणनमात्र फलमल्प भवति बहुजीवाना घातश्च भवति ॥३२९॥ द्विदलमिति—द्विदल मुद्गमाषादिधान्य द्विदल द्वे दले विभागौ यस्य पृथक्तया पेषणादिना जाते तद्द्विदल मुद्गमाषादिक सखण्ड प्रायश भक्षणीयम् तत्र सखण्डत्वात् अङ्कुरशक्त्यभाव। अनवता गत द्विदलम् अकृतद्विदलभाव द्विदल जीर्णं प्रायेण ग्राह्यम् यदि अदृष्टजन्तुसम्मूर्च्छन विद्येत। जन्तुसम्मूर्च्छने तद्धेयम्। सिम्बय भल्लराजमाषप्रमुखफलिका सबला त्याज्या न भक्षणीया। कदा न भक्षणीया। या सकलाश्च साधिता स्यु अकृतद्विभावा एव यदि अग्निना पाचिता स्युस्तर्हि तासा भक्षण पापप्रद स्यात्, अखण्डत्वात् तद्गतत्रसजीवानाम् अग्निसयोगेन मृति प्राप्तत्वात् ॥३३०॥ दयार्द्रताया यथाभावस्तद्वर्णनम्—तत्रेति—यत्र बह्वारम्भपरिग्रहस्तत्राहिंसा कुत। प्राणिपीडाहेतुव्यापार आरम्भ। ममेद बुद्धिलक्षण परिग्रह। बहव आरम्भपरिग्रहा यस्य तस्मिन्नरे अहिंसा कुतो भवेत्। तत्र कोमलपरिणामाभावात् लोभाकुलत्वात् च दयाभावो न भवति। वञ्चके परप्रतारणशीले नरे कुशीले परदारलम्पटे च दयालुता नास्ति ॥३३१॥ कस्य जीवस्य असद्वेद्य कर्म बध्यते। शोकेति—स्वपरयो शोकसतापसक्रन्दपरिदेवनदु खानि भवन्जन्तु असद्वेद्याय जायते। अन्यस्मिञ्जने स्वस्मिश्च शोकाद्युत्पादिका यस्य बुद्धिर्भवति स जन्तु प्राणी असद्वेद्याय असत् अशुभ दु खदायक वेद्य वेदनीयाख्य कर्म असद्वेद्य तस्मै हेतुर्जायते भवति। शोकादीना[1] व्याख्या क्रमश—अनुग्राहकसबन्धविच्छेदे वैक्लव्यविशेष शोक। परिवादादिनिमित्तादाविलान्त करणस्य तीव्रानुशय सताप। परितापजाताश्रुपातप्रचुरविलापादिव्यक्तक्रन्दन सक्रन्दनम्। सक्लेशपरिणामावलम्बन गुणस्मरणानुकीर्तनपूर्वक स्वपरानुग्रहाभिलाषविषयमनुकम्पाप्रचुर रोदन परिदेवनम् ॥३३२॥ चारित्रमोहास्रव निगदति—कषायेति—यस्य भाव कषायोदयतीव्रात्मा उपजायते असौ जीव चारित्रमोहस्य समाश्रयो जायते। यस्य जीवस्य भाव क्रोधादिकषायाणाम् उदयात्तीव्र उत्कट भवति स चारित्रमोहकर्मण समाश्रय अवलम्बन भवति। ततश्च स जीव व्रतादिपालने समर्थो न भवति। तस्मिन् हिंसादिपापसमर्थो भवति ॥३३३॥

---

१ सर्वार्थसिद्धौ 'दु खशोकादि' सूत्रस्य टीकाया व्याख्या इमा द्रष्टव्या।

एकस्मिन्निति—उत्साहशालिना पुंसा मनस एकस्मिन् कोणे अनायासेन चतुर्दशभवनानि समान्ति । उत्साहेन शोभमानानाम् उद्यमिना नराणा मनस एकस्मिन् विभागे अनायासेन विना परिश्रम चतुर्दशभुवनानि समान्ति । अर्थात् मनस तादृशी शक्तिरस्ति यया चतुर्दशभुवनान्यपि ज्ञायन्ते । अथवा चतुर्दशभुवनाना स्वरूप दर्पणतले यथा पुरत स्थित सकलोऽपि वस्तुनिवहो दृश्यते तथा प्रतिभाति । अत लोकोक्तिरिय सत्येति ज्ञातव्या ॥३४६॥ तृणादीनामपि हिंसन यावता निज प्रयोजन सिद्ध्येत्तावदेव कुर्यात् इति कथयति—भूपेति—भुव भूमे पयसो जलस्य पवनस्य वायो अग्नेश्च तथा तृणादीनाम् आदिशब्देन वल्लीगुल्मतर्वादीना हिंसन तावदेव कुर्यात् यावता स्वस्य कार्यं स्यात् कोऽसौ कुर्यात् अय गृहस्थ । कथम् अजन्तु यत् यत्र स्थाने त्रसा न सन्ति तस्मात्स्थानाद् गृहीतव्य जलतृणादिकमिति भाव ॥३४७॥ ग्रामेति—ग्रामस्वामिस्वकार्येषु ग्रामकार्यं सकलजनाना यत् कार्यं तस्मिन् राज्ञा नियुक्त गृहस्थ यथालोक लोकस्यानतिक्रमेण लोकानुसारेण कुर्यात् एव स्वामिकार्य निजप्रभुणा आदिष्टम्, स्वकार्य च लोकानुसारेण कुर्याद्वा यो य आलोक आप्तोपदेशप्रकाशस्तेन तेन तत्तत्कार्यमाचरेत् इति ग्राह्यम्, यत अत्रास्मिञ्जगति गुणदोषविभागे लोक एव गुरुर्ज्ञातव्यः ॥३४८॥ दर्पेणेति—दर्पेण इन्द्रियमदेन प्रमादाद्वा कषायावेशवशतया वा । द्वीन्द्रियादिविराधने द्वीन्द्रियादिप्राणिविनाशने यथादोष दोषमनतिक्रम्य यथागमम् आगम प्रायश्चित्तशास्त्रम् अनुसृत्य प्रायश्चित्तविधि कुर्यात् ॥३४९॥ प्रायश्चित्तनिरुक्तिमाह—प्राय इति—लोक प्राय इत्युच्यते प्राय इति शब्दो लोकस्य वाचक । तस्य लोकस्य चित्त मन उच्यते । एतस्य मनस शुद्धिकर कर्म तप अनशनादिक प्रायश्चित्त प्रचक्षते आख्यान्ति । योऽपराधी जन प्रायश्चित्त करोति तस्य मनसस्तत्करणाच्छुद्धिर्जायते अन्ये च ये सधर्माण सन्ति तेषामपि मनस सतोषोत्पादन भवति, प्रायश्चित्त गृह्णतो जनस्य पुनरकार्ये प्रवृत्तिर्न भवति । जिनाज्ञा च प्रतिपालिता भवति ॥३५०॥ प्राज्ञा प्रायश्चित्तस्य दातार —द्वादशेति—आचारादिद्वादशाङ्गश्रुतधारकोऽपि एक गुरु कृच्छ्र प्रायश्चित्त दातुं नार्हति तस्माद्बहुश्रुतज्ञा विद्वास प्रायश्चित्तप्रदाने अधिकारिणो मता । एको विद्वान् देशकालादिसकलावस्थाना विमर्शं कर्तु न प्रभवति अत विशिष्टप्रायश्चित्तदाने आचार्यो बहूना विदुषामभिप्रायस्य सम्यगालोचन कृत्वा प्रायश्चित्त दातु समर्थो भवति ॥३५१॥ येन साधनेन दुष्कृत कृत तेनैव तस्य विनाश कार्य इत्याह—मनसेति—मनसा चित्तेन, कर्मणा हस्तपादादिना शरीरेण, वाचा च परुषया दुरभिप्राययुतया यद्दुष्कृतमघम् उपार्जित सचित तत् तेनैव मनसा कर्मणा वाचा विशुद्धाभिप्रायतया तद्दुष्कृत तत्पाप तथैव विहापयेत् विनाशयेत् ॥३५२॥ योगस्वरूप निगदति—आत्मदेशेति—आत्मन प्रदेशाना परिस्पन्द कम्पन योग इति स योगविदा योगमार्गणास्वरूपस्य ज्ञातृणा मत अभिमत । स च मनोवाक्कायत जायते मनसा आत्मप्रदेशाना कम्पने जातो योग मनोयोगसज्ञा लभते । वचसात्मप्रदेशकम्पनं वचोयोग , कायेन जीवप्रदेशचञ्चलता भवति तदा काययोगो जायते । इति त्रियोगा पुण्यपापास्रवाश्रया पुण्यास्रवकारणत्वात् शुभयोगत्रितयम् । पापास्रवकारणत्वादशुभयोगत्रितयमुच्यते ॥३५३॥ अशुभयोगत्रितय क्रमशो दर्शयति—हिंसनाब्रह्मचौर्येति—हिंसन प्राणिवध अब्रह्म मैथुनसेवनम्, चौर्यादिकं च काये शरीरे कर्म अशुभ विदु । अशुभ पापोत्पादकम् । असत्यम् असभ्य सभ्यजनायोग्यम्, पारुष्य कर्कशम्, इत्यादि वचनविषय कर्म अशुभवाग्योगयुक्त ज्ञायताम् ॥३५४॥ मदेर्ष्येति—मदो गर्व , ईर्ष्या द्वेष , असूया परगुणामहनम् आदिशब्देन रागादयो विकारा एतत्सर्वं मनोव्यापाराश्रितम् अशुभमनोयोगसज्ञमुच्यते । एतद्विपर्ययात् हिंसनादेर्विपर्ययात् असत्यासभ्यादेर्विपर्ययात् मदेर्ष्यासूयनादेर्विपर्ययात् शुभ कायवाङ्मनोगतं कर्म ज्ञेयम् ॥३५५॥ तत्पुन पापम् एतेषु हिरण्यादिदानेषु दत्तेषु न शाम्यतीति कथयति—हिरण्येति—हिरण्य सुवर्णं पशुर्धेन्वादिक भूमि सस्योत्पत्तिक्षेत्रम् कन्या प्रसिद्धा शय्या तल्पम् अन्नम् ओदनादिकम्, वासासि वस्त्राणि, एतेषा वस्तूना दानै अन्यैश्च पदार्थैर्न पापम् उपशाम्यति । पापनाशने एतानि दानानि नोपाय । यथा लङ्घनेन आहारत्यागेन ओषधग्रहणेन साध्यानाम् उपशान्ति व्रजता रोगाणा बाह्यो विधि हस्तपादमर्दनादिकम् अकिंचित्करम् रोगहरणेऽक्षमम् । तथा पापेऽपि दानादिक मन्यताम्, तेन पापापायो न भवति ॥३५६-३५७॥ निहत्येति—मनोवाग्देहदण्डनै मनोनिग्रह कृत्वा, भाषानिग्रह विधाय, देहनिग्रह च कृत्वा सकल पाप निहत्य विनाश्य, तत दानपूजादिक कर्म व्रतिक करोतु ॥३५८॥ प्रत्याख्यान विधाय

एकस्मिन्निति—उत्साहशालिना पुंसा मनसः एकस्मिन् कोणे अनायासेन चतुर्दशभवनानि समान्ति। उत्साहेन शोभमानानाम् उद्यमिना नराणां मनसः एकस्मिन् विभागे अनायासेन विना परिश्रमं चतुर्दशभुवनानि समान्ति। अर्थात् मनसः तादृशी शक्तिरस्ति यया चतुर्दशभुवनान्यपि ज्ञायन्ते। अथवा चतुर्दशभुवनानां स्वरूपं दर्पणतले यथा पुरतः स्थितः सकलोऽपि वस्तुनिवहो दृश्यते तथा प्रतिभाति। अतः लोकोक्तिरियं सत्येति ज्ञातव्या ॥३४६॥ तृणादीनामपि हिंसनं यावता निजं प्रयोजनं सिद्धयेत्तावदेव कुर्यात् इति कथयति—भूपेति—भुवः भूमेः पयसो जलस्य पवनस्य वायोः अग्नेश्च तथा तृणादीनाम् आदिशब्देन वल्लीगुल्मतर्वादीनां हिंसनं तावदेव कुर्यात् यावता स्वस्य कार्यं स्यात् कोऽसौ कुर्यात् अयं गृहस्थः। कथम् अजन्तु यत् यत्र स्थाने त्रसा न सन्ति तस्मात्स्थानाद् गृहीतव्यं जलतृणादिकमिति भावः ॥३४७॥ ग्रामेति—ग्रामस्वामिस्वकार्येषु ग्रामकार्यं सकलजनानां यत् कार्यं तस्मिन् राज्ञा नियुक्तः गृहस्थः यथालोकं लोकस्यानतिक्रमेण लोकानुसारेण कुर्यात् एवं स्वामिकार्यं निजप्रभुणा आदिष्टम्, स्वकार्यं च लोकानुसारेण कुर्याद्वा यो यः आलोकः आप्तोपदेशप्रकाशस्तेन तेन तत्तत्कार्यमाचरेत् इति ग्राह्यम्, यतः अत्रास्मिञ्जगति गुणदोषविभागे लोक एव गुरुर्ज्ञातव्यः ॥३४८॥ दर्पेणेति—दर्पेण इन्द्रियमदेन प्रमादाद्वा कषायावेशवशतया वा। द्वीन्द्रियादिविराधने द्वीन्द्रियादिप्राणिविनाशने यथादोषं दोषमनतिक्रम्य यथागमम् आगमं प्रायश्चित्तशास्त्रम् अनुसृत्य प्रायश्चित्तविधिं कुर्यात् ॥३४९॥ प्रायश्चित्तनिरुक्तिमाह—प्राय इति—लोकः प्राय इत्युच्यते प्राय इति शब्दो लोकस्य वाचकः। तस्य लोकस्य चित्तं मनः उच्यते। एतस्य मनसः शुद्धिकरं कर्म तपः अनशनादिकं प्रायश्चित्तं प्रचक्षते आख्यान्ति। योऽपराधी जनः प्रायश्चित्तं करोति तस्य मनसस्तत्करणाच्छुद्धिर्जायते अन्ये च ये सधर्माणः सन्ति तेषामपि मनसः सतोषोत्पादनं भवति, प्रायश्चित्तं गृह्णतो जनस्य पुनरकार्ये प्रवृत्तिर्न भवति। जिनाज्ञा च प्रतिपालिता भवति ॥३५०॥ प्राज्ञाः प्रायश्चित्तस्य दातारः—द्वादशेति—आचारादिद्वादशाङ्गश्रुतधारकोऽपि एकः गुरुः कृच्छ्रं प्रायश्चित्तं दातुं नार्हति तस्माद्बहुश्रुतज्ञा विद्वांसः प्रायश्चित्तप्रदाने अधिकारिणो मताः। एको विद्वान् देशकालादिमकलावस्थानां विमर्शं कर्तुं न प्रभवति अतः विशिष्टप्रायश्चित्तदाने आचार्यो बहूनां विदुषामभिप्रायस्य सम्यगालोचनं कृत्वा प्रायश्चित्तं दातुं समर्थो भवति ॥३५१॥ येन साधनेन दुष्कृतं कृतं तेनैव तस्य विनाशः कार्य इत्याह—मनसेति—मनसा चित्तेन, कर्मणा हस्तपादादिना शरीरेण, वाचा च परुषया दुरभिप्राययुतया यद्दुष्कृतमघम् उपार्जितं संचितं तत् तेनैव मनसा कर्मणा वाचा विशुद्धाभिप्रायतया तद्दुष्कृतं तत्पापं तथैव विहापयेत् विनाशयेत् ॥३५२॥ योगस्वरूपं निगदति—आत्मदेशेति—आत्मनः प्रदेशानां परिस्पन्दः कम्पनं योगः इति स योगविदां योगमार्गणास्वरूपस्य ज्ञातॄणां मतः अभिमतः। स च मनोवाक्कायतः जायते मनसा आत्मप्रदेशानां कम्पने जातो योगः मनोयोगसंज्ञां लभते। वचसात्मप्रदेशकम्पनं वचोयोगः, कायेन जीवप्रदेशचञ्चलता भवति तदा काययोगो जायते। इति त्रियोगाः पुण्यपापास्रवाश्रयाः पुण्यास्रवकारणत्वात् शुभयोगत्रितयम्। पापास्रवकारणत्वादशुभयोगत्रितयमुच्यते ॥३५३॥ अशुभयोगत्रितयं क्रमशो दर्शयति—हिंसनाब्रह्मचौर्येति—हिंसनं प्राणिवधः अब्रह्म मैथुनसेवनम्, चौर्यादिकं च काये शरीरे कर्म अशुभं विदुः। अशुभं पापोत्पादकम्। असत्यम् असभ्यं सभ्यजनायोग्यम्, पारुष्यं कर्कशम्, इत्यादि वचनविषयं कर्म अशुभवाग्योगयुक्तं ज्ञायताम् ॥३५४॥ मदेर्ष्येति—मदो गर्वः, ईर्ष्या द्वेषः, असूया परगुणासहनम् आदिशब्देन रागादयो विकाराः एतत्सर्वं मनोव्यापाराश्रितम् अशुभमनोयोगसंज्ञमुच्यते। एतद्विपर्ययात् हिंसनादेर्विपर्ययात् असत्यासभ्यादेर्विपर्ययात् मदेर्ष्यासूयनादेर्विपर्ययात् शुभं कायवाङ्मनोगतं कर्म ज्ञेयम् ॥३५५॥ तत्पुनः पापम् एतेषु हिरण्यादिदानेषु दत्तेषु न शाम्यतीति कथयति—हिरण्येति—हिरण्यं सुवर्णं पशुर्धेन्वादिकं भूमिः सस्योत्पत्तिक्षेत्रम् कन्या प्रसिद्धा शय्या तल्पम् अन्नम् ओदनादिकम्, वासांसि वस्त्राणि, एतेषां वस्तूनां दानैः अन्यैश्च पदार्थैर्न पापम् उपशाम्यति। पापनाशने एतानि दानानि नोपायः। यथा लङ्घनेन आहारत्यागेन ओषधग्रहणेन साध्यानाम् उपशान्तिं व्रजतां रोगाणां बाह्यो विधिः हस्तपादमर्दनादिकम् अकिंचित्करम् रोगहरणेऽक्षमम्। तथा पापेऽपि दानादिकं मन्यताम्, तेन पापापायो न भवति ॥३५६-३५७॥ निहत्येति—मनोवाग्देहदण्डैः मनोनिग्रहं कृत्वा, भाषानिग्रहं विधाय, देहनिग्रहं च कृत्वा सकलं पापं निहत्य विनाश्य, ततः दानपूजादिकं कर्म प्रतिकं करोतु ॥३५८॥ प्रत्याख्यानं विधाय

[ पृष्ठ १५०-१५५ ] अहिंसादिगुणलाभाय मैत्र्यादिभावनाभ्यासः कार्यः —मैत्र्यादि— मैत्रीप्रमोदकारुण्यमाध्यस्थ्यानि यथाक्रमं । सत्त्वे गुणाधिके क्लिश्यमाने निर्गुणेऽपि च भावयेत् । मैत्र्यादीनां सत्त्वादीनां च क्रमशो वैपरीत्यं स्वयं ग्रन्थकारः पद्यत्रयेण कथयति ॥१३४॥ कायेनेति—कायेन शरीरेण मनसा वाचा च परे अन्यस्मिन् सकलेऽपि देहिनि प्राणिनि अदुःखजननी दुःखं कस्यापि माभूत् इति मनोवृत्तिः मैत्रीविदां मैत्री विदन्ति जानन्ति इति मैत्रीविदः तेषां मैत्री मता परेषां दुःखानुत्पत्त्यभिलाषो मैत्री स्मृता ॥१३५॥ तपोगुणेति—तपसा अधिके गुणैः सम्यग्दर्शनादिभिश्च अधिके गरीयसि पुंसि धार्मिके जने । प्रश्रयाश्रयनिर्भरः प्रश्रयः विस्रम्भो विनयो वा तस्य आश्रय आधारः तेन निर्भरः पूर्णः जायमानः मनोरागः मनोभक्तिः प्रमोदः । सत्प्रमाणादिभिरभिव्यज्यमानान्तर्भक्तिरागः प्रमोदः इति विदुषां मतः विदुषाणां मतः संमतः ॥१३६॥ दीनेति—असद्वेद्योदयमापादितक्लेशाः विक्लवमाना दीनाः तेषां दीनानाम् अभ्युद्धरणे दारिद्र्यरोगादिपीडापनयने या बुद्धिः संकल्पः तत्कारुण्यम् । माध्यस्थ्यस्य लक्षणमेवम्—निर्गुणात्मनि तत्त्वार्थश्रवणग्रहणाभ्यामपरिपालितगुणा निर्गुणात्मा तस्मिन् अविनये दुर्वाग्निर्योजिता वृत्तिर्माध्यस्थ्यं रागद्वेषरहितो मम स्वभावः उपेक्षाभावः माध्यस्थ्यमुच्यते ॥१३७॥ इत्यमिति—एवं मैत्र्यादिभावनोपेतस्य प्रयतमानस्य ईर्ष्यादिरहितचित्तस्य गृहस्थस्यापि देहिनः स्वर्गः करस्थो जायते । अस्य गृहस्थस्य च तत्पदं मुक्तिपदं दूरं नास्ति स्तोककर्मसम्बन्धेन एव तत् ॥१३८॥ दयावति नरे पापाभावः—पुण्यमिति—पुण्यं तेजःस्वरूपम् पापं पुनः तमोमयम् अन्धकारमयम् आहुः कथितवन्तः । तत्पापं दयादीधितिमालिनि दयाख्या दीधितिमाला किरणमाला यस्य स दयादीधितिमाली तस्मिन् दयादीधितिमालिनि कृपारश्मिमति पुरुषसूर्ये तत्पापं किं तिष्ठेत् अपि तु तत्र पापं नैव तिष्ठेत् ॥१३९॥ सेति—यस्याः हिंसायाः हिंसा नैवास्ति सा क्रिया कापि इहलोके नास्ति परम् अत्र क्रियायां मुख्यानुषङ्गिकौ भावौ विविच्येते । यथा इमं प्राणिनं हिनस्मीति संकल्पो यत्र क्रियायां वर्तते सा क्रियैव हिंसामयी जायते । यदा च क्रिया भवति परं तत्र तादृक् हिंसासंकल्पो न विद्यते तत्र गौणो भावो हिंसायाः भवति अत एव स भाव आनुषङ्गिको मतः ॥१४०॥ हिंसकाहिंसकयोः स्वरूपम्—अघ्नन्नपि इति—कश्चन जनः अघ्नन्नपि प्राणिमारणम् अकुर्वाणोऽपि अभिध्यानविशेषेण हिंसासंकल्पेनैव पापी भवेत् । निघ्नन्नपि पापभाक् न प्राणिपीडां कुर्वाणोऽपि पापवान् न भवति । कथम् । प्राणिहिंसायाः असंकल्पनात् । यथा धीवरः सततं हिंसाध्यवसायवान् भवति अतः स अघ्नन्नपि पापी स्यात् । कर्षकस्य भूमिकर्षणसमये जीवहिंसनम् अनिवार्यं तथापि जीवहिंसासंकल्पेन स भूमिकर्षणे न प्रवर्तते अतः स पापभाक् न भवति । कर्षकस्य अभिध्यानविशेषः जीवमारणसंकल्परहितो भवति । धीवरस्य च अभिध्यानविशेषे तद्वधसंकल्पः सर्वदा विद्यते अतः अघ्नन्नपि पापी भवत्येव ॥१४१॥ अभिध्यानविशेषं द्वितीयेन निदर्शनेन व्यनक्ति—पश्यविदिति—दाराम्बान्तरमन्तरा एकपार्श्वे दारास्तिष्ठन्ति द्वितीयपार्श्वे माता तिष्ठति तयोर्मध्ये सन्निविष्टस्य उपविष्टस्य तस्य वपुःस्पर्शाविशेषेऽपि उभयोर्जननीभार्ययोरङ्गस्पर्शे समानेऽपि शेमुषी तु विविच्यते बुद्धिविशेषो भवत्येव पृथक्त्वेन इयं माता भार्येयमिति च भिन्नविषया बुद्धिर्युगपदुत्पद्यते ॥१४२॥ तदुक्तम्—परिणाममेवेति—कुशलाः पण्डिताः खलु पुण्यपापयोः परिणाममेव अभिध्यानमेव कारणं ब्रुवन्ति । तस्मात्पुण्योपचयः शुभपरिणामेभ्यः पुण्योपचयः सुविधेयः कार्यः । तथा पापापचयः पापानां दुरितानाम् अपचयः हानिर्विनाशः सुविधेयः करणीयः ॥१४३॥ वपुष इति—वपुषः शरीरस्य । वचसः भाषणस्य वा शुभाचाराः अशुभाचाराः या क्रिया भवति सा क्रियास्त्वेव वस्तुषु स्थूलपदार्थेषु क्रमेणैव भवेत् । युगपत् नैव भवेत् । सूक्ष्मवस्तुषु तथा युगपत् वचसः प्रवृत्तिः शरीरस्य च नैव भवति । अत्र आभ्यां पृथक् विशेषतां मनो बिभर्ति । वा कायेन शुभाम् अशुभां वा प्रवृत्तिं अपूर्वयती कुर्वता मनः युगपत्कर्मशीलमिति ज्ञेयम् । विना चित्तं वै ता कर्तुं न क्षमे अतः अत्र मनोविषयक्रियासु नरः प्रयतः सावधानो भवेत् । मनसो या क्रिया भवति सा लोकत्रितयादपि महत्तरा जायते । तथा एकस्मिन्क्षणे जायते । अतः मनःक्रियासु विवेकेन भाव्यमन्यथा महान् पापबन्धः स्यात् ॥१४४॥ क्रियान्यत्रेति—क्रियास्त्वेव वस्तुषु बाह्यपूजादिषु शुभेषु हिंसादिष्वशुभेषु या कायिकी वचःसम्बन्धिनी वा क्रिया भवति सा क्रमेणैव भवति परं । मनसो या क्रिया भवति सा लोकत्रितयादपि महत्तरा जायते तथा एकस्मिन् क्षणे जायते । अतः मनःक्रियासु विवेकेन भाव्यमन्यथा महान् पापबन्धः स्यात् ॥१४५॥

मृग हरिण. तस्य विनोदस्य विहारभूमि संचारस्थानम् । एषा स्मर काम एव द्विरद. गज तस्य वन्धने वारिवृत्ति वन्धनरज्जु । एषा किं खेचरी विद्याधरी, किम् अमरी सुरी, वा किम् इय रति· मदनभार्या ॥४२३॥

[ पृष्ठ १६५-१६७ ] इति च विचिन्त्य मकरेति—मकर मत्स्य. केतौ ध्वजे यस्य स मदन तस्य वशे व्यापारनिधि प्रवृत्तिनिधान यस्य, प्रवृत्तेति—प्रवृत्त. प्रादुर्भूत दुरभिसधि. दुष्टो मनोविचारो यस्य पुरुषेति—पुरुषप्रयोगेण दूतसप्रेषणादिना अभिमतस्य इष्टस्य सिद्धि प्राप्तिम् अनववुद्धयमान अजानन्, तडिल्लता नाम धात्रीम्, कथभूताम् । पराशयेति—पराभिप्राय एव शैल पर्वत तस्य विदारणे विदलने तडिल्लतामिव विद्युल्लतामिव । अपडक्षीणे शरणे न पट् अक्षीणि नेत्राणि यत्र तथाभूते शरणे गृहे तृतीयाद्यगोचरे गृहे विजने गृहे इत्यर्थ । सुनयेति—सुनयाना विज्ञप्त्यादिव्यवहाराणाम् आयतनादिभि स्थानादिभि पादपतनादिभि चरणवन्दनादिकै प्रश्रयै. विनयै । कथभूतै. असदाशयाश्रयै दुरभिप्रायावलम्बनै अवन्ध्यसाध्य सफलसाध्यम् उपरुध्य ज्ञात्वा । स्वकीयेति—निजाभिप्रायगहनवर्धनभूमिम् अकरोत् विदधे । तदुपरोधात् तस्य उपरोधात् आग्रहात् तथाविधविधिविधात्री वशीकरणकार्यविधायिनी तत्कार्यविधायिनी—धात्री ( स्वगतम् ) परपरिग्रह परस्य अन्यस्य परिग्रह कलत्रम् । अन्यतरानुरागग्रहश्च अन्यतरस्य अनुराग स्नेहस्तस्य ग्रहण चेति दुर्घट दु सधान प्रतिभास अनुभवो यस्य तादृक् खलु अय कार्योपन्यास । अथवा सुघट एव सुसधान एव अय कार्यघट । इय कार्यरचना सुसधानैव । यत यस्मात् तप्तातप्तऽयसोरयसोरिव अग्नितप्तानग्नितप्तयो प्लवयसो चक्रलोहनेम्योरिव विरुद्धयोश्चेतसो मनसो सागत्याय अनुकूलीकरणाय खलु पण्डितै. दौत्य दूतत्व करणीयम् । अन्यथा सरसतरसो रससहितयो· वेगवतो द्रवस्वभावयो जलयोरिव सरसतरसो प्रेमवतो वेगवतोश्च अन्योन्य प्रति उत्सुकयो द्रवस्वभावयो काठिन्यरहितयो चित्तयो एकीकरणे किं नु नाम प्रतिभाविजृम्भितम् । का नाम नवनवोन्मेषशालिन्या वुद्धे स्फूर्ति । प्रतिकूलस्वभावयोर्मनसोरेकीकरणे यद्दौत्य क्रियते तदेव दौत्य प्रशस्यमित्यर्थ । किं च । सा दूतिकेति—या वुधाना विदुषाम् अभिमतकार्यविधौ इष्टकर्मकरणे चातुर्यवर्यवचनोचितचित्तवृत्ति चातुर्येण वुद्धिकौशल्येन वर्यं श्रेष्ठ यद्वचन तस्य उचिता योग्या चित्तवृत्ति मनोवृत्ति यस्या. सा दूतिका स्वामिसदेशप्रापिका ज्ञेया । या दूतिका किं करोति । चुम्बकोपलकलेव चुम्बति लोहमाकर्पति स चासौ उपलश्च चुम्बकोपल अयस्कान्त तस्य कला अश यथा अन्त शल्यं लोहमय वहि करोति । तथा अपरस्य अन्यस्य नरस्य चेतोनिरूढ मनसि स्थित शल्य वैरादिक वहि करोति ततो निष्कासयति । एतादृशी एव दूतिका प्रशस्येति भाव ॥४२४॥ तदल विलम्वेन अस्मिन् कार्ये कालक्षेपो न कर्तव्य इति भाव । यथा परिपक्वफल व्यतिक्रान्तकाल सरसत्वाधिष्ठान न भवति । तत् उचितकालातिक्रमेण गन्धवर्णरसभ्रष्ट भवति । तथात्र कार्ये विलम्वे जाते सति अस्य कार्यस्य सरसत्वं च नश्येत् । किंत्वस्य साहसावलम्वनधर्मण कर्मण साहसाश्रयसाध्यस्य कार्यस्य दैवात् सिद्धौ सत्याम्, परेङ्गिताकारसर्वज्ञै प्राज्ञै अन्यमन स्थिताभिप्रायचेष्टाना विद्भि विवुधै , कथमपि महता कष्टेन, वहुजनावकाशे कृते सति वहुजनाना मनसि अवकाशे परिचये कृते सति स्नेहे आदरे वा समुत्पादिते सति शरीरी साहसकर्मण कर्ता नर पुरश्चारी भवति अग्रणी जायते । साहसकार्यस्य असिद्धौ सत्या शरीरी तत्कार्यस्य विधाता दुरपवादपरागावसर जननिन्दाधूलिपातस्थान व्यसनगोचरश्च भवति विपद्विषयश्च जायते । तत् ध्वनयेय कथयामि या इयं पद्मा इद कार्यं च अवसेय ज्ञातु योग्यम् । इय पद्मा किंस्वभावा कीदृश्यस्या मनोवृत्तिरिति ज्ञातव्यम् । इद च कार्यम् अद्वितीयापत्यप्रसवाय अद्वितीयं न द्वितीयम् अद्वितीयम् एक तच्च तदपत्य पुत्र तस्यैव प्रसव उत्पत्तिर्यस्य तथाभूताय सचिवाय अवसेय ज्ञातव्यम् । तदुदाहरन्ति—"न च अनिवेद्य भर्तु किंचिदारम्भ कुर्यात् अन्यत्रापत्प्रतीकारेभ्य." स्वामिन अनिवेद्य अकथयित्वा न च किंचित् आरम्भम् कार्यं कुर्यात् स्वामिन पृष्ट्वा कार्यं कुर्यात् इति भाव । परम् आपत्प्रतीकारेभ्य अन्यत्र विपत्तिनिराकरणसमये स्वामी न प्रष्टव्य अपृष्ट्वा एव स्वामिन तदुपद्रवकारिणीम् आपद परिहरेत् इति । ( प्रकाशम ) प्राणप्रियैकापत्य अमात्य, प्राणवत् प्रिय वल्लभम् एकम् अपत्य यस्य तथाभूत हे अमात्य सचिव, ईदृश इव सामान्यजन इव भवादृशोऽपि जन जातस्य पुत्रस्य जीविते अमृतस्य निषेकाय सेचनाय अचिरत्न यत्न तात्कालिक प्रयत्न विधातुं योग्यो भवान् भवति । अमात्य —समस्तमनोरथसमर्थनकथासमार्ये आर्ये, समस्ताना सकलाना मनोरथानाम्

मृग हरिण. तस्य विनोदस्य विहारभूमि सचारस्थानम्। एषा स्मर काम एव द्विरद. गज तस्य बन्धने वारिवृत्ति बन्धनरज्जु। एषा किं खेचरी विद्याधरी, किम् अमरी सुरी, वा किम् इय रति मदनभार्या ॥४२३॥

[पृष्ठ १६५-१६७] इति च विचिन्त्य मकरेति—मकर मत्स्य केतौ ध्वजे यस्य स मदन तस्य वशे व्यापारनिधि प्रवृत्तिनिधान यस्य, प्रवृत्तेति—प्रवृत्त. प्रादुर्भूत दुरभिसधिः दुष्टो मनोविचारो यस्य, पुरुषेति—पुरुषप्रयोगेण दूतसप्रेषणादिना अभिमतस्य इष्टस्य सिद्धि प्राप्तिम् अनवबुद्धयमान अजानन्, तडिल्लता नाम धात्रीम्, कथभूताम्। पराशयेति—पराभिप्राय एव शैल पर्वत तस्य विदारणे विदलने तडिल्लतामिव विद्युल्लतामिव। अपडक्षीणे शरणे न पट् अक्षीणि नेत्राणि यत्र तथाभूते शरणे गृहे तृतीयाद्यगोचरे गृहे विजने गृहे इत्यर्थ। सुनयेति—सुनयाना विज्ञप्त्यादिव्यवहाराणाम् आयतनादिभि स्थानादिभि पादपतनादिभि चरणवन्दनादिकै प्रश्रयै. विनयै। कथभूतै असदाशयाश्रयै दुरभिप्रायावलम्बनै. अवन्ध्यसाध्य सफलसाध्यम् उपरुध्य ज्ञात्वा। स्वकीयेति—निजाभिप्रायगहनवर्धनभूमिम् अकरोत् विदधे। तदुपरोधात् तस्य उपरोधात् आग्रहात् तथाविधविधिविधात्री वशीकरणकार्यविधायिनी तत्कार्यविधायिनी—धात्री (स्वगतम्) परपरिग्रह परस्य अन्यस्य परिग्रह कलत्रम्। अन्यतरानुरागग्रहश्च अन्यतरस्य अनुराग. स्नेहस्तस्य ग्रहण चेति दुर्घट दु सधान प्रतिभास अनुभवो यस्य तादृक् खलु अय कार्योपन्यास। अथवा सुघट एव सुसधान एव अय कार्यघट। इय कार्यरचना सुसधानैव। यत यस्मात् तप्तातप्तत्त्वयसोरयसोरिव अग्नितप्तानग्नितप्तयो प्लवयसो चक्रलोहनेम्योरिव विरुद्धयोश्चेतसो मनसो सागत्याय अनुकूलीकरणाय खलु पण्डितै दौत्य दूतत्व करणीयम्। अन्यथा सरसतरसो रसमहितयो. वेगवतो द्रवस्वभावयो जलयोरिव सरसतरसो प्रेमवतो वेगवतोश्च अन्योन्य प्रति उत्सुकयो द्रवस्वभावयो काठिन्यरहितयो चित्तयो एकीकरणे किं नु नाम प्रतिभाविजृम्भितम्। का नाम नवनवोन्मेषशालिन्या बुद्धे स्फूर्ति। प्रतिकूलस्वभावयोर्मनसोरेकीकरणे यद्दौत्य क्रियते तदेव दौत्य प्रशस्यमित्यर्थ। किं च। सा दूतिकेति—या बुधाना विदुषाम् अभिमतकार्यविधौ इष्टकर्मकरणे चातुर्यवर्यवचनोचितचित्तवृत्ति चातुर्येण बुद्धिकौशल्येन वर्यं श्रेष्ठ यद्वचन तस्य उचिता योग्या चित्तवृत्ति मनोवृत्ति यस्या. सा दूतिका स्वामिसदेशप्रापिका ज्ञेया। या दूतिका किं करोति। चुम्बकोपलकलेव चुम्बति लोहमाकर्षति स चासौ उपलश्च चुम्बकोपल अयस्कान्त तस्य कला अश' यथा अन्त.शल्यं लोहमय बहि करोति। तथा अपरस्य अन्यस्य नरस्य चेतोनिरूढ मनसि स्थित शल्य वैरादिक बहि करोति ततो निष्कासयति। एतादृशी एव दूतिका प्रशस्येति भाव ॥४२४॥ तदल विलम्बेन अस्मिन् कार्ये कालक्षेपो न कर्तव्य इति भाव। यथा परिपक्वफलं व्यतिक्रान्तकाल सरसत्वाधिष्ठान न भवति। तत् उचितकालातिक्रमेण गन्धवर्णरसभ्रष्ट भवति। तथात्र कार्ये विलम्बे जाते सति अस्य कार्यस्य सरसत्व च नश्येत्। किं त्वस्य साहसावलम्बनधर्मण कर्मण' साहसाश्रयसाध्यस्य कार्यस्य दैवात् सिद्धौ सत्याम्, परेङ्गिताकारसर्वज्ञै प्राज्ञै अन्यमन स्थिताभिप्रायचेष्टाना विज्ञै विबुधै, कथमपि महता कष्टेन, बहुजनावकाशे कृते सति बहुजनाना मनसि अवकाशे परिचये कृते सति स्नेहे आदरे वा समुत्पादिते सति शरीरी साहसकर्मण कर्ता नर पुरश्चारी भवति अग्रणी जायते। साहसकार्यस्य असिद्धौ सत्या शरीरी तत्कार्यस्य विधाता दुरपवादपरागावसर जननिन्दाधूलिपातस्थान व्यसनगोचरश्च भवति विपद्विषयश्च जायते। तत् ध्वनयेय कथयामि या इय पद्मा इदं कार्यं च अवसेय ज्ञातु योग्यम्। इय पद्मा किंस्वभावा कीदृश्यस्या मनोवृत्तिरिति ज्ञातव्यम्। इद च कार्यम् अद्वितीयापत्यप्रसवाय अद्वितीयं न द्वितीयम् अद्वितीयम् एक तच्च तदपत्य पुत्र तस्यैव प्रसव उत्पत्तिर्यस्य तथाभूताय सचिवाय अवसेय ज्ञातव्यम्। तदुदाहरन्ति—"न च अनिवेद्य भर्तु किंचिदारम्भ कुर्यात् अन्यत्रापत्प्रतीकारेभ्य" स्वामिन अनिवेद्य अकथयित्वा न च किंचित् आरम्भम् कार्यं कुर्यात् स्वामिन पृष्ट्वा कार्यं कुर्यात् इति भाव। परम् आपत्प्रतीकारेभ्य अन्यत्र विपत्तिनिराकरणसमये स्वामी न प्रष्टव्य अपृष्ट्वा एव स्वामिन तदुपद्रवकारिणीम् आपद परिहरेत् इति। (प्रकाशम्) प्राणप्रियैकापत्य अमात्य, प्राणवत् प्रिय वल्लभम् एकम् अपत्य यस्य तथाभूत हे अमात्य सचिव, ईदृश इव सामान्यजन इव भवादृशोऽपि जन जातस्य पुत्रस्य जीविते अमृतस्य निषेकाय सेचनाय अचिरत्न यत्न तात्कालिक प्रयत्न विधातु योग्यो भवान् भवति। अमात्य—समस्तमनोरथसमर्थनकथासमार्ये आर्ये, समस्ताना सकलाना मनोरथानाम्

अभिलाषाणां समर्थनकथा फलसाधनकथा तस्यां स्मार्ये स्मरणयोग्ये आर्ये पूज्ये तज्जीवितामृतनिषेकाय तस्य मदनरसस्य जीवितायम् अमृतनिषेकाय सुधासेचनाय मज्जीवितोचितविवेकाय च मदीयं जीवितं मत्प्राणा तस्य उचितो योग्यो यो विवेकः तस्मै तत्र भवती पूज्या त्वमेव प्रभवति समर्था भवसि । धात्री—अथ किम् । अभ्युपपन्नं भवाहन । तथापि अवश्लेति—अबलाजनानां नारीजनानां मनसो अतिरिक्ता अधिका या प्रतिमा सा अस्ति यस्य स प्रतिभावान् तेन प्रतिमावता । हे अमात्य नारीजनप्रतिमाया अपि भवत प्रतिभा अधिका अस्ति अतो भवतापि अस्मिन् कमपि प्रयत्नं करणीय इत्यभिप्राय पूतकात्यायनीप्रक्रियार्था पूतकात्यायनीरेषा या धनपूजा काषायवसना भगवा च सा वृद्धी कात्यायनीरुच्यते । करसङ्केति—हस्तगतमुक्तस्फटिकमणिरिव विलासवदकल्मषीस्वभावा तैर्त्रैः नयनमनोहरत्वमनी भवती नयनमनोमोदजनकपदार्थेव । अतिदीर्घकालं विहितावरा परिमाप्येति—परिप्राप्य अन्य। प्रथमस्य प्रीत्या प्रार्थनस्य प्रत्युपकार अपवारीभूय यथा सा तथाभूता सा वृद्धी एकदा मुदा भावत्वेन रहसि विजने तां पुण्यपुरोहितमार्यम् उद्दिश्य इमं वक्ष्यमाणम् प्रस्तुतेति—प्रवर्तमानकार्यरचनायाः अनुकूलमर्मविशेषैर्तं श्लोकं पद्यम् उदाहार्षीत् अवन्ती—स्त्रीषु इति—अत्र वदति स्त्रीषु नारीषु गज्जैव आकूल्येन यस्या पुष्पवती या परभोगोपभोगापि परेषां समीपे भोगदानाय उपगच्छन्त्यपि अमुना शिवेन मूर्ध्नि मस्तके अधिमाल्ये रत्नमणिव सोत्सवं सानन्दं ध्रियते स्थाप्यते ॥४२५॥ भट्टिनी—( स्वगतम् ) इत्वरीति—परपुरुषानेति गच्छति इत्येवं शीला इत्वरी कुलटा पुंश्चली स चासौ जनश्च इत्वरीजन तस्माचरणम् असत्प्रवृत्तिः तदेव हर्म्यं भवनं यासु तस्य निर्माणाय प्रथमसूत्रपात इव प्रथमत एव भूमिमापनार्थं सूत्राकूलमिव अयं वाक्यप्रस्ताव उपलक्ष्यते । तथा चाह मा इयं तावत् वाकूलपरिपाकम् स्वामिप्रसादस्य परिपाके निकल्पीयं सारम् । (प्रकाशं) आर्ये किमस्य सुभाषितस्य ऐदंपर्यं तात्पर्यम् । धात्री—परमसौभाग्यभागिनि भट्टिनि वरतमहीयाम्यवति भट्टिनि भट्टं स्वामित्वम् अस्या अस्तीति भट्टिनी तत्संबोधनं हे भट्टिनि हे वाक्छन आर्ये ज्ञानासि एवास्य सुभाषितस्य कैम्पर्यम् तात्पर्यम् । यदि न कल्पवटितहृदयासि चेत्कपेन निर्मितचित्ता न भवसि । भट्टिनी—( स्वगतम् ) सत्य कल्पवटितहृदयाहम् । यदि चेत् भवत्प्रयुक्तोपवाक्तुभवकर्ततिकाया न भविष्यामि । अथवा प्रयुक्तः य उपघातः अपकार स एव घुणः कीटकः तेन कर्तरितः कामः उत्कीर्ण देहो यस्याः तथाभूताहं न भविष्यामि । आर्ये हृदयेऽभिनिविष्टम् अर्थं मनसि निश्चयेन प्रविष्टम् अर्थम् अभिप्रायं श्रोतुमिच्छामि । धात्री—वत्से कथयामि किं तु चित्त द्वयोरिति—ज्ञानम् अभिमान विस्तोज्यति तथुभयम् एव कर्णं तैन बन्धावी बुद्धि यस्य तेन नरेण । द्वयोः पुरतः जगत एव चित्तं निजाभिप्रायं निवेदनीयं कथनीयम् । यौ तौ द्वौ नरौ ययोः पुरतः चित्तं निवेद्यते इत्याह—यः प्रार्थितम् इति—य नरः अभियुज्यमान संबध्य मानः प्रार्थितं निजस्य याचनाविषयं न खण्डयति न स्फोटयति यो वा जनो निजस्य मनसः अनुकूलः भवति सोऽपि रहस्यं न भिनत्ति । अत इमौ द्वौ एव नरौ रहस्यकथनयोग्यौ निस्नेही ॥४२६॥ भट्टिनी—(स्वगतम्) अहो नम प्रकृतिम् अपि इयं नमय आकाशस्य स्वभावम् अपि नैमल्यमपि पङ्कैः कर्दमैः उपलेप्तुं प्रक्षिप्तुम् इच्छति आकाशवन्निर्मलस्वभावां मा पतिव्रताम् इयं जाल्मी असतीजनयोग्यकर्दमैः प्रक्षिप्तुमिच्छति । इति स्पष्टं यथा अभूदेव । (प्रकाशम्) आर्ये प्रयमनापि समर्थाहम्, अहं रहस्यभेदिका न भवामि । त्वत्कलशोऽनुकूला च भवामि । चित्तं द्वयोरिति न मद्युक्तम् न ममाश्रयानम् । न मद्युपक्रमं वा न मत्प्रया प्रथमं कार्यम् प्रारब्धमिति । न हि मदीय उपाधिना च मदीय वचनं किं तु पूर्वं ईदृशी गतिरस्ति । धात्री—(स्वगतम्) अनुगुणेयं खलु कार्यपरिणति इयं खलु निश्चयेन कार्यपरिणति कर्मणः परिणमनम् अनुगुणा मदभिप्रायानुकूला भवति । यदि चेत् निकट तटकूलस्य समीपवर्तिप्राप्तस्य वहित्रयानस्येव नौकायानरीस्येव दुर्वाताभिघातो न भवेत् । दुष्टो वातः दुर्वात तस्य वातो पतितस्य दुर्वातको तस्या संनिपात वेगेन आपतनं न भवेत् । मम कार्यं तु अधुना सम्यक् अनुकूल प्रायमेव जाने इति धात्री वदति यदि कोऽपि नान्तरायोऽत्र स्यात् । ( प्रकाशम् ) अत एव मां वदन्ति पुराविदः ।

[ पृष्ठ १९८ ] विधुरिति—गुरो बृहस्पतेः कलत्रेण भार्यया सह विधुश्चन्द्रः समागत्य मैथुनं चकार । सोमवंश्य भयो मायया अहल्यया सह अमरेश्वरः इन्द्रः । धन्वमोन् यस्य च भार्यया मञ्जुया सह बुधवर्गा चकार पुरा किल समयान्तः संभोगं चकार ॥४२७॥ भट्टिनी—आर्ये एवमेव सत्यमेतत् । अत । खोणामिति—स्त्रीणां

वपु शरीर बन्धुभि स्वजनै अग्निसाक्षिकम् अग्नि साक्षीकृत्य परत्र अन्यस्मिन् पुरुषे विक्रीतम् अर्पितम् । परम् इद मानस न विक्रीतम्, न दत्तमिति भाव । ननु यत्र विश्रम्भगर्भा निर्वृति प्रणयपूर्वा निर्वृति संतोष आह्लाद भवति स एव कृती पुण्यवान् धन्य तस्य मानसस्य अधिपति स्वामी मत ॥४२८॥ धात्री—पुत्रि, तर्हि श्रूयताम्, त्व किल एकदा कस्यचित्कुसुमकिमारुनिर्विशेषवपुष, कुसुमस्य किसारव. केशरा तै निर्विशेषवपुष समानशरीरस्य कुसुमकेशरकोमलदेहस्येति भाव । पुराङ्गनेति—नगरस्त्रीजननयनकमलमोदे अमृतरोचिष सुधाकरतुल्यस्य कस्यचिन्नरस्य । प्रासादेति—प्रासादस्य हर्म्यस्य परिसरे पर्यन्तभुवि विहारिणी त्वम् एकदा । वीक्षणेति—नयनमार्गानुयायिनी सती कौमुदीव ज्योत्स्नेव । हृदयेति—हृदयम् एव चन्द्रकान्तमणि तस्य आनन्द एव नि स्यन्द जलनिर्गम तस्य सपादिनी अभू त्वम् अभव । तत्प्रभृति तद्दिनमारभ्य, ननु तस्य मदनसुन्दरस्य यून तरुणस्य । प्रत्यवसितेति—प्रत्यवसित विनष्ट वसन्तश्रीसमागममयो यस्य तथाभूतस्य पुष्पधयस्येव भ्रमरस्येव रसालमञ्जर्यामिव आम्रपुष्पपङ्क्तौ इव भवत्या महान्ति खलु मन्दमकरन्दास्वादने स्वैर मकरन्द-भक्षणे दोहदानि अभिलाषा सन्ति । नितान्त नितरा चिन्ताचक्रपरिक्रान्त चिन्ता मानसी व्यथा तस्या चक्रेण परिक्रान्त व्याकुल स्वान्त तस्य मानसम् । प्रसभमिति—प्रसभ नितरा तव गुणस्मरणपरिणत्या. आधार तस्य मनोऽस्ति । अनवरतमिति—सतत रामणीयक तव देहसौन्दर्यम्, तस्य अनुकीर्तन पुन: पुन स्मरण तस्य सकेतो यत्र तथाभूत तस्य मन । प्रविकसदिति—प्रविकसत् विकास प्राप्नुवत् कुसुमतुल्यविलासयोग्य-वल्लरीसदृशवल्लभाजने सनिहितेऽपि समीपस्थितेऽपि तस्मिन् तस्य महानुद्वेग, अतीव खिन्नता विद्यते । पिशाचेति—पिशाचेन देवविशेषेण छलितस्येव पीडितस्य नरस्येव अस्थाने स्वायोग्ये वस्तुनि अनुबन्ध स्नेह । संजातेति—सजात: उत्पन्न उन्माद चित्तविभ्रम यस्य तथाभूतस्य नरस्येव विचित्र नानाविध उपलम्भ विभ्रम तेन क्रियाप्रारम्भो यस्य । पुन कथभूत । स्कन्धेति—स्कन्धे निजस्कन्धे निजभुजशिरसि गदेन गृहीत-स्य नरस्येव प्रतिदिन लब्धकृशावस्य । स्मरेति—स्मरस्य कामस्य आराधनाया प्रणीत विहित प्रणिधानम् ऐकाग्र्य येन तथाभूतस्य नरस्येव इन्द्रियेषु सनता अवसाद' कार्श्यम् अभवत् । प्राणेषु च अद्यश्वीनकथा असुषु जीविते वा अद्यश्वीनकथा अद्य श्वो वा भवति अद्यश्वीन मरण तस्य कथा । अपि च—अनवरतेति—अनवरत सतत जलेन आर्द्राणि क्लिन्नानि यानि आन्दोलनानि व्यजनानि तेषा स्पन्दा चञ्चलता. तै मन्दै अति-सरसा अतिस्निग्धा या मृणाल्य कमलिन्य तासा कन्दलै अङ्कुरै नालै कथभूतै चन्दनार्द्रै चन्दनेन आर्द्रै क्लिन्नै एतै सर्वै करणभूतै हे प्रियसखि, अमृतेति—अमृतरुचि चन्द्र तस्य मरीचय: करा: तै प्रौढिता प्रगल्भता यस्या तथाभूतायाा निशायाम् ते सुहृद मित्रस्य वल्लभस्येत्यर्थ किंचित् आत्मप्रबोध अल्पस्वानुभूति-विद्यते । स्मरव्यथया तव वल्लभोऽतीव पीडित इति भाव ॥४२९॥

[ पृष्ठ १९९-२०० ] भट्टिनी—आर्ये, किमित्यद्यापि गोपायते, केनाह दृष्टा, क स्मरपीडित तस्य नामादिक कथ न कथयसीत्यर्थ । मा निह्नुष्व सर्वं स्फुट कथयेति भाव । धात्री—( कर्णजाहमनुसृत्य ) एवमेवम् । सचिवपुत्र कह्लारपिङ्ग स्मरपीडित इति भाव. । भट्टिनी—को दोष । धात्री—कदा । कदा तेन आगन्तव्यम् इति प्रश्नो धात्र्या कृत । भट्टिनी—यदा तुभ्य रोचते । तदा तेनागन्तव्यम् इतश्च अनन्तरायतया निर्बाधतया तया पद्मया पुष्यभार्यया अनुमता सा धात्री । तनयानुमताहितमतिपाटव तनयस्य अनुमत प्रियं यत्कार्यं तत्र आहित स्थापित मतिपाटव बुद्धिचातुर्यं येन स सचिवोऽपि उग्रसेनोऽपि । नृपतीति—नृपते वर्षणाह्वस्य निवासे गृहे उचितप्रचारेषु उचित योग्य प्रचार प्रवर्तन येषा तेषु वासरेषु दिनेषु यातेषु कस्मिंश्चिद्दिने गुणव्यावर्णनप्रसगे आगतम् एतस्य महीपते नृपस्य पुरत श्लोकम् इमम् उपन्यास्थत् अपठ-दित्यर्थ । राज्यमिति—यस्य वेश्मनि गृहे किंजल्प पक्षिविशेष विद्यते तस्य राज्य विवर्धते । सिद्धात् मन्त्राराधनाल्लब्धाच्चिन्तामणेर्यथा किंजल्पपक्षिप्राप्ते शत्रवश्च क्षय यान्ति ॥ ४३० ॥ राजा—अमात्य, क्व तस्य प्रादुर्भूति, कीदृशी च तस्याकृति । अमात्य—देव, भगवत पार्वतीपते पूज्यस्य गौरीवल्लभस्य श्वशुरस्य पार्वतीपितु, कथभूतस्य श्वशुरस्य । मन्दाकिनीति—मन्दाकिन्या गङ्गाया स्पन्द प्रवाह तस्य निदान कारण कन्दरनीहारो गुहाहिम यस्य । पुन कथभूतस्य । रमणेति—रमण पति सहचरो सहयायी यासा ता खेचर्य खगाङ्गना तासा सुरतस्य सभोगस्य परिमल विमर्दोत्थजनमनोहरगन्ध, तेन मत्ता लम्पटा

रुचिरेण सुन्दरेण प्रयाणयोग्यवेषेण जोष्य सेवनीय त पुष्य पुर अग्रे वने विनिवेश्य स्थापयित्वा। भट्टेति—भट्टात् पुष्पभट्टात् हेतो. उद्भूत जात आरम्भ यस्य तथाभूतेन सभापणेन सनाथो युक्त य सखीजन तेन सकल्पा भूपिता। धृतेति—धृत प्रोपितभर्तृकाया आकल्पो वेषो यया सा, (प्रकृष्ट दूर गत प्रोपित प्रवास गतो भर्ता यस्या सा प्रोपितभर्तृका) अभिमुखम् अयासीत् अगच्छत्। अपरेद्यु अन्यस्मिन्दिने स निखिलगुणा एव द्रविण धन तेन विशेष्य इतरजनेभ्य असमान पुष्य पृथिवीपतिभवन धर्पणनृपप्रासादम् अनुगम्य 'देव, अय स किजल्प पक्षी, इय च तत्प्रसवित्री माता पतत्रिणी च पक्षिणी च, इत्याचरत् इत्यवदत्।

[ पृष्ठ २०२-२०३ ] राजा—( चिर निर्वर्ण्य निर्णीय च स्वरेण ) पुरोहित, नैप खलु किंजल्प पक्षी, किं तु कडारपिङ्गोऽयम्। एपापि विहङ्गी पक्षिणी न भवति किं तु तडिल्लतेय कुट्टिनी पुरुषेण सह परस्त्रीयोगम्य कर्त्री। पुष्य—देव, एतत्परिज्ञाने प्रगल्भमतिप्रसव. सचिव। देव एतस्य किंजल्पपक्षिविषयकपरिज्ञाने प्रगल्भ प्रौढ मतिप्रसव बुद्ध्युत्पाद यस्य तथाभूत सचिव। राज्ञा सचिवस्तथा पृष्ट क्ष्मातल पातालं प्रविविक्षुरिव प्रवेष्टुमिच्छन्निव क्षोणीतल भूतलम् अवालोकत ऐक्षत। राजा—पुष्य, समास्ताम्। अय भवान् ऐतिह्यनिकर प्राग्वृत्तजात कथयितुम् अर्हति। प्राग्वृत्त सकल कथयेति राजा पुष्यम् अपृच्छत्। पुष्य—स्वामिन्, कुलपालिकात्र प्रगल्भते। कुलं पालयति इति कुलपालिका कुलवती मे धर्मपत्नी ऐतिह्यनिकर कथयितु प्रगल्भते समर्था भवति। भूपति भट्टिनीम् आहूय 'अम्ब, कोऽय व्यतिकर किं प्रकरणमिदम' इत्यपृच्छत्। भट्टिनी तदुदन्त तत्प्रकरणस्य पूर्ववृत्तान्तम् आख्यत् अवर्णयत्। काश्यपीश्वर कश्यपस्येय काश्यपी पृथ्वी तस्या ईश्वर अधिपति धर्पण शैलूष इव नटवत् हर्षामर्षोत्कर्षस्थामवस्थामनुभवन् आनन्दकोपोत्कटाम् अवस्था दशाम् अनुभवन् सकलनिशान्तस्थितस्त्रीजनप्रणम्यमाणचरणकमला ता पश्चा तैस्तै साध्वीगणानन्ददै स्तुतिवचनै समानसनिधानै समादरसूचकै भूषणदानैश्च उपचर्य पूजयित्वा, वेदविद्द्विजोह्यमानकर्णीरथारूढा स्त्रीणा वाहनार्थं वस्त्रादिना आच्छादितस्य रथविशेषस्य कर्णीरथ इति नाम। वेदविद्भि वेदार्थं जानद्भि द्विजै विप्रै स्कन्धे धृत्वा नीयमानकर्णीरथम् आरूढा पश्चा वेश्म गृह प्रवेश्य, पुन 'अरे निहीन नितरा हीन नीच, किमिह नगरे न सन्ति सकललोकसाधारणभोगा अखिलजनसामान्यैर्भुज्यमाना सुभगा सुन्दरा सीमन्तिन्य नार्य किमिति न सन्ति येनैवम् आचर दुराचरण कृतवान्। कथ च दुराचार, एवमाचरन् न अत्र विलाय विलीनोऽसि। दुर्व्यवहार, एवम् आचरण कुर्वंस्त्व लवणवत् जले कथ न विलीनोऽसि। तत् इदानीमेव यदि भवन्तं तृणाङ्कुरमिव तृणेह्मि हन्मि, तदा तव हुकृतम् अभिमान अपकृत स्यात् नष्ट भवेत्।' इति निर्भरम् अतिशयेन निर्भर्त्स्य तर्जयित्वा दुर्नयनगरभुजग दुराचारपुरजार कडारपिङ्ग कुट्टिनीमनोरथातिथिं कुट्टिन्या परस्त्रिय पुरुषेण योजयन्त्या विद्युल्लताया मनोऽभिलाषस्य अतिथिम् अभ्यागत सतृण तृणेन सहितम् उग्रसेनमन्त्रिण च निखिलजनसमक्षम् आक्षारणापूर्वक परस्त्रीनिमित्त दूषण दत्वा प्रावासयत् देशान्तर प्राहिणोत्। दुष्प्रवृत्तानङ्गमातङ्ग दुष्प्रवृत्तेन दुराचारेण अनङ्गत्वात् कामाकुलत्वात् मातङ्ग चाण्डालसदृश, कडारपिङ्ग तथा प्रजाप्रत्यक्ष पौरसमक्षम् आक्षारित परस्त्रीनिमित्त दत्तदूषण सुचिर दीर्घकालम् एतदेन फलम् अनुभूय एतस्य परस्त्रीपापस्य फलं भुक्त्वा दशमीस्थ मरणावस्था दशमीत्युच्यते तस्या तिष्ठतीति दशमीस्थ। मरण प्राप्त सन् श्वभ्रप्रभवभाजन श्वभ्रे नरके प्रभव उत्पत्ति तस्य भाजन पात्र जनम् अभजत्। नरके समुत्पन्न इति भाव। भवति चात्र श्लोक—मन्मथेति—मन्मथ काम तेन उन्माथित पीडित स्वान्त मन यस्य, परस्त्रिया सह रति सभोग तस्मिन् जाता धी मतिर्यस्य स कडारपिङ्ग सकलात् परस्त्रीसभोगमनोऽभिलाषात् रसातले नरके निष्पात पतित अजायतेति भाव ॥४३१॥

इत्युपासकाध्ययनेऽब्रह्मफलसाधारणो नाम एकत्रिंशत्तम कल्प ॥३१॥

## ३२. परिग्रहमहत्त्वफलकथनो नाम द्वात्रिंशत्तमः कल्पः

[ पृष्ठ २०३ २०४ ] ममेदमिति—बाह्याभ्यन्तरवस्तुषु धनधान्यमणिमुक्तादिषु बाह्यवस्तुषु रागादिषु च अभ्यन्तरवस्तुषु मम इदम् इति संकल्प संरक्षणार्जनसंस्कारादिरूप परिग्रह मत तत्र येषाम् मनस मिथ्यात्वं सद्बोधनं कुर्वन्ति तेषु मनोऽभिलाषं कर्मणि निरर्थं ॥४१२॥ बाह्यपरिग्रहान् व्याचष्टे—क्षेत्र सस्योत्पत्ति स्थानम् वास्तु शालिकाद्यादिकम् धनं हिरण्यसुवर्णादि वास्तु गृहं कुप्यं क्षौम-कार्पास-कौशेय चन्दनादि । शयनं शय्या आसनं पीठमञ्चादिकम् द्विपदाः दासीदासम् चतुष्पदाः गोमहिष्यादय भाण्डं भाजनानि । इति बाह्या दश परिग्रहा ॥४१३॥ अभ्यन्तरपरिग्रहा —मिथ्यात्वेति—मिथ्यात्वेन अनन्तानुबन्धिना सहिता यथो वेदा स्त्रीवेद पुरुषेण सह रमणाभिलाष भार्यामुत्पादने । पुरुषवेद भार्या सह रमणाभिलाषः पुरुषे । नपुंसकवेद उभाभ्यां रमणाभिलाष । हास्यादय षट् हास्यं रति अरति शोक भयम् जुगुप्सा । चत्वारश्च कषाया क्रोध मान-माया-लोभा । इति अन्तःपरिग्रहा चतुर्दश । अन्तर्ग्रन्था अपि कथ्यन्ते । यत आत्मनि यै संसार बध्यते बध्यते ते ग्रन्था राग-द्वेष-लोभ-मोहादय परिणामविशेषा ते आत्मन्येव संभवन्ति ॥४१४॥ बाह्यान्तर परिग्रहवर्णनम्—चेतनेति—बाह्येषु स्वस्मात् भिन्नेषु चेतनेषु गो महिष-पुत्र-कलत्रादिषु आसक्तिः एका बाह्यचेतनपरिग्रह मणिमुक्तास्वर्णादिषु अचेतनेषु आसक्ति द्वितीय अचेतन बाह्य परिग्रह इति बाह्यचेतनाचेतनपरिग्रहद्वयम् उच्यते बाह्यपरिग्रहद्वैविध्यम् । परं मनोहेतुकत्वात्मक संसारकारणा ये मिथ्यात्वादिरूपाश्च आत्मनः चैतन्यरूपा परिणामा ते आत्मन आधार यस्य स अन्तःपरिग्रह एक एव । उपाधिभेदात् त्रिविधत्वम् अस्य परिग्रहस्य निगदन्त्याचार्या विध्यावबोधार्थम् ॥४१५॥ धनायेति—धनाया धनाभिलाषा तया आविद्ध बुद्धीनां व्याकुलमतीनां नराणां मनोरथा कदाचन धनरहिता भवन्ति । हि यस्मात्कारणात् अनर्थक्रियारम्भा धी तदर्थिषु कामभुक् न भवति । अर्थ प्रयोजनं यस्या सिध्यति सा क्रिया अर्थक्रिया न अर्थक्रिया अनर्थक्रिया अनर्थक्रियाया आरम्भो यस्यां सा धी मति तदर्थिषु धनार्थिषु धनादिषु कामभुक् न भवति कामान् इष्टाभिलषितान् न दुग्धे । इच्छया मनोरथैर्वा धनानि न लभ्यन्ते । धनप्राप्तिकारणम् अन्तरायकर्मणां क्षयोपशमोऽस्ति इति मत्वा आर्तध्यानं न कर्तव्यम् ॥४१६॥ सहेति—सह युगपत् समकालीना संभूति आत्मना सह जन्म यस्य स एव देहोऽपि यत्र शाश्वत स्थिरः न तत्र इष्टदारकदारेषु इष्टं धनम् दारक पुत्र दारा पत्नी एतेषु महात्मनां किं स्पृहायां का आस्था क प्रयत्न ॥४१७॥ स इति—य धर्माय दानपूजादिकार्याय धनागम धनप्राप्तिं न विमर्शेत नोपभुङ्क्ते तथा लोभाय य धनागमं नोपभुङ्क्ते तस्य स विफल एवायासस्तनवत् ॥४१८॥ प्राप्ते इति—ये धने प्राप्ते लब्धे न माद्यन्ति न गर्विणो भवन्ति । ये प्राप्तिस्पृहयाकुला न भवन्ति । धनप्राप्त्यै न स्पृहयन्ति च त एव महात्मानः लोकद्वयाभिगता इहपरलोकसुखसमन्विताः सर्वेषां परमेश्वरा भवन्ति । उपर्युक्ता एव महात्मान इहलोके चाभीष्टसिद्धिं लभन्ते परलोके स्वर्गादी इन्द्रविभूतिं च प्राप्नुवन्ति । ॥४१९॥ चित्तस्येति । हे चित्त हे मन चित्तस्य मनस्य चिन्तायाम् अभिलाषायाम् एतत् पापात् परम् अन्यत् फलं नास्ति न । हि यत कथितमेतद् यस्मात् कथिते चिन्त्यमानस्य प्रयतमानस्य नरस्य चित्तस्य वा चलता दुःखात् परम् अन्यत् फलं न भवति ॥४४ ॥ निर्ममस्य सुखं भवतीति निरूपयति—अन्तरिति—अन्त अंतरङ्गे । परिग्रहे रागादौ । बहिरपि परिग्रहे मणिमुक्तादिके । यस्य मानसं निर्ममम् अनासक्तं भवति । स अनन्यपुण्यसंपद्य अनन्यसुखसंपूर्णं नर सर्वत्र सुखम् आत्मनो लभ्यते ॥४४१॥

[ पृष्ठ २०५ ] बाह्येति—बाह्ये मणिमुक्तादिषु पुत्रकलत्रादिके च । सङ्गे परिग्रहे । रते आसक्ते । पुंसि पुरुषे । चित्तविमुक्तता मनोनैर्मल्यं कुत एव स्यात् । यदि तद्रूपे बाह्ये बाह्ये आसक्ति तस्यै अन्त विमुक्तता अन्तर्निर्मलता दुर्लभा भवति ॥४४२॥ सत्पात्रेति—य पुरुष सत्पात्रे रत्नत्रययुक्ते मुनौ श्रावके च विधि योग्येन धनार्पणेन अर्थसंग्रहतत्पर धनार्जने तत्पर भवति स कुम्भेषु महाकुम्भ यत कुम्भ यावज्जीवं धनं न त्यजति परं मृत स्वेन सह अमुत्र परस्मिन्लोके धनं नेतुमक्षम । परं सत्पात्रे धनं विनियुञ्जान परलोकेऽपि धनं लभति अत स एव कुम्भेषु महाकुम्भ ज्ञेय ॥४४३॥ परिग्रहप्रमाणानुव्रतमाहात्म्यं प्रदर्शते—कृत्वेति—कृतं प्रमाणं परिमाणं यस्य तस्मात् धनात् । लोभेन अविकसंग्रह अविकधनसंग्रह यस्य भवति स गृहमेधिना कस्य

मणुव्रतत्रयाणि पञ्चमाणुव्रतहानि करोति ॥४४८॥ अस्मिन् द्वन्द्वद्वयेऽपि उभयपरिग्रहेऽपि यस्य देहिन शरीरिण। मन निःस्पृह वर्तते। स पुरुष स्वर्गापवर्गलक्ष्मीणा पक्षे क्षणात् दक्षते चतुरो भवति। निःस्पृहचित्तस्य नरस्य स्वर्गापवर्गलक्ष्मीणा प्राप्तिर्भवति॥४४९॥ अत्यर्थम्—अतिशयेन अर्थकाक्षाया धनाभिलाषाया नृणाम् अघौघसचित पापसमूहस भूतम्। येन मनागावर्तवर्तेन भवस्य आवर्त गर्त तत्र वर्त्त वर्तन गच्छतीति ससारावर्तवर्तगम्। भवगर्तभ्रमणवत् भवनि जायते ॥४४६॥

[ पृष्ठ २०४-२०७ ] श्मश्रुनवनीतस्य परिग्रहाग्रहस्योपाख्यानम्—पाञ्चालदेशेषु त्रिदशेति—त्रिदशाना देवाना निवेश निवास स्वर्ग तद्वत् अनुकूले सुजनजनके उपशल्ये समीपे। काम्पिल्ये तन्नामके नगरे रत्नप्रभो नाम नृपति। कथभूत स। निर्जेति—स्वधीप्रभावधिकृतदेवगुरुप्रज्ञ। अस्य मणिकुण्डला नाम महादेवी कथभूता सा। आत्मीयेति—आत्मन इमौ आत्मीयौ तौ च तौ कपोलौ गण्डौ तयो कान्तिर्द्युति तया विजित पराभूतम् अमृतमरीचे सुधाकरस्य चन्द्रस्य मण्डल ययेति। अस्य नृपस्य सागरदत्तो नाम श्रेष्ठी। कथभूत स। कुलेति—कुल वश तस्य क्रम परम्परा तस्मात् आगत प्राप्तम् आत्मोपार्जित च स्वेन सपादित च अमित विपुल वित्त यस्य स। सागरदत्तो नाम श्रेष्ठी। गृहस्य श्रीरिव रमा यया धनश्रीर्नामास्य भार्या। सूनु पुत्र अनयो धनश्रीसागरदत्तयो सुदत्तो नाम। कथभूत स। न्यायादनपेतो न्याय्य स चासौ अर्थ न्याय्यार्थ स्वामिमित्रविश्वसितद्रोहवञ्चनादिकविरहित अर्थ न्याय्यार्थ तस्योपार्जने एक चित्त तत्पर मनो यस्य स सुदत्तो नाम सूनु पुत्र। स सागरदत्त कथभूत। महालोभेति—महालोभ एव विभावसुरग्नि तेन ज्वलत् दहत् चित्तस्य मनस भित्तम् अशो यस्य स सागरदत्त। पुरुषेति—अनेकपूर्वपुरुषक्रमेणागताया सुवर्णकोटे, स्वय सपादितार्धकोटे स्वामी भवन्नपि शालीयादिभक्तभोजने कलमाद्यन्नभुक्तौ द्वयो तुषयो त्वचो अपनीतिर्हानिर्भवति। द्वावनाश्राणाकृतिश्च द्वौ तुषौ अनाश्राणाकृती च अग्निजलसयोगेनापि अपक्वावस्थावेव तिष्ठत। शाकाना पाकविधाने अग्निना पक्वत्वकरणे सभारादिकृतिश्च तल्लवनक्रियाया तन्मूलाना शाकनाडिकाना कठिनावयवाना च अपनयन क्रियते, प्रसभ यथेच्छम् अभ्यवहृतिश्च भक्षण च भवति। घार्तपूराः घार्तिकाख्या भक्ष्यविशेषा, पूरिका पोलिका, वेष्टिमावेष्टनाकारा ('जिलेबी' इति भाषायाम्) एतेषा भक्ष्याणाम् उपक्षेपे ग्रहणे भक्षणे वा महती महान् स्नेहापहति घृततैलादिविनाश स्यात् इन्धनाना काष्ठाना विरति हानिर्भवेत्। दुग्धदधिघोलरसाद्युपयोगे भक्षणे कृते विक्रय कर्तुं न शक्यते 'यत्तु सस्नेहमजल मथित घोलमुच्यते' न च तक्र कडङ्गरायेति भक्ष्यविशेषाय तक्रस्यापि उपयोगो न भवेत्। इति मन्यमान विमर्श कुर्वन् स्वयमेव प्रतिदिवसवृद्धिग्रहणाय प्रतिदिनम् अधर्मणात् कुसीदग्रहणाय ध्वजलोकपाटके ध्वजलोकास्तैलिका तेषा पाटके गृहपङ्क्तौ विहरमाण गच्छन् प्रतिपितृप्रिययन्त्रमुपसृत्य तिलतुदयन्त्राणा समीप स्थित्वा आ सुरभि सुगन्धि खलु एष खल पिण्याक सजात इति सस्मेर स्मित कृत्वा व्याहरन् ब्रुवाण, गृहीतपिण्डखण्ड स्वीकृतपिण्याकशकल, प्रत्यवमानसमये भोजनवेलाया तद्गन्धम् आजिघ्रन् सन् सर्वजनत्यक्तम्, अतीतकालमर्याद जीर्णमित्यर्थ अतिक्रान्तसमर्घम् अतीव सुलभ दरिद्रेणापि प्राप्यम्, अकण्डितमेव च स्थालीविलीय स्थालीनिहित तदोदनादिक शीघ्र पक्व भवति तत् केवलम् अवन्तिसोमेन सह काञ्जिकया सह अय सागरदत्त आहरति भक्षयति। अत एव अस्य महामोहसबद्धस्य पिण्याकगन्ध इति नाम जगति पप्रथे, प्रसिद्ध बभूव। 'मुखामोदमात्रेण च प्रयोजनम्। तदल ताम्बूलार्थम् अर्थव्ययेन, धनत्यागेन'। इति विचिन्त्य विष्णुतरुत्वच वृक्षविशेषस्य या त्वक् तस्या कालवल्लीदलोत्तरास्वादरुच पिप्पलच्छल्ली वावचीपत्राणा च पश्चाद्भोजनेन रुक् रुचिर्यासा विष्णुतरुत्वच ता कवलयति भक्षयति। अर्धघ्राणोदर परिवार ऊनभोजन भृत्यवर्ग कदाचिदपि देहे हृदये वा न मनागपि विकुरुते आलस्ययुक्तो न भवति। इति मत्वा न कमण्डूर्वपूर पूरयति। कुक्षिपूरणमात्रम् अन्न कस्यापि न ददाति। प्रतिचारकाश्च स्वभृत्याश्च एव शिक्षयति उपदिशति—'न तैलार्थ लवणार्थ वित्त व्ययितव्यम्' किं तु कार्षापण माष चादाय कार्षापण कपिकाख्य पणास्य वा नाणकम् आदाय तथा माष चादाय गृहीत्वा यत तैलादिक मीयते तद्भाण्ड चादाय आपण विपणि उपढौक्य गत्वा तदुभय गृहीत्वा पुनरिद मान्न न भवति इति समर्पयन्नापणिकाय तत्र माषे भाण्डे किंचिल्लग्नम् आयाति

भारवाहकाना विहितोपचार. गृहादर ना. सुवर्णेष्टका. सगृह्णन् स्वीकुर्वन् श्रुत आकर्णित स्वसीयस्य भगि
पुत्रस्य अपायोदन्त मृत्युवार्ता येन तथाभूत पिण्याकगन्ध. कायमानेति—कायमान वर्धमान य म
मन्यु मन शोक तेन गृतो अन्या नान यस्य स ( स्वसुत सुवर्णेष्टकाग्रहणं कुर्विन्त्यादिश्य भगिनीग्राम गतवान्
पुत्र, सकलकलानिपुणचित्तसुदत्त तव पितृव्यस्य पुत्रशोकशान्त्यै मया अनन्य गन्तव्यम् अपस्नानव्य च मृतोद्दे
स्नान च कर्तव्यम्। ततस्तत्प्रार्थिता सुवर्णेष्टका परिस्कन्दलोकप्रलोभेन पति आसमन्तात् स्कन्देन भारवाहि
लोकानां प्रलोभेन दत्वा साधु सग्रहीतव्या । इत्युपह्वरे एकान्ते व्याहृत्य उक्त्वा सकलेति—सकल
तज्जगत् सकलजगत् तस्य व्यवहार प्रवृत्ति तस्य अवतार उत्पत्ति तस्मै पितेषा वेदत्रयनदृश्या काक
नगर्या तोकस्य पुत्रस्य शोकात् अश्रूणि नेत्रजलानि भूयिष्ठानि यस्या सा तथाभूताया कनिष्ठाया लघिष्ठा
स्वसु दर्शनार्थमगच्छत् । असद्व्यवहारव्यावृत्त असत्यव्यवहारात् निवृत्त सुदत्त तातोपदेश पितुरादे
अनि श्रेयस अश्रेयस्करम् अवस्यन् जानन्, सत राजपरिगृहीत राजस्वामिक तृणमपि काञ्चनीभवति सु
जायते सपद्यते च तद्धेतुर्भवति पूर्वपुरुषाजितस्यापि धनस्यापहरणाय प्राणविनाशाय च इति जातमति उद्
विवेक न एकामपि इष्टका समग्रहीत् समगृह्णात् । महालोभलोलतान्ध पिण्याकगन्ध तस्या काकन्द्या
पुर्या अपस्नात्वा मृतकोद्देशेन स्नान विधायागत सुतमपृच्छत् । वत्स, कियती खलु त्वम् इष्टकातती इष्टक
तती समूहान् पर्यग्रहीः अगृह्णा । स्तेययोगविनिवृत्त स्तेय चौर्य तस्य योग सबन्ध तस्माद्विनिवृत्त विर
सुदत्त —तात, नैकामपि इष्टकामहम् अगृह्णाम्। [श्रुत्वैतत्पुत्रवाक्य पिण्याकगन्ध स्वपादौ शिलापुत्रकेण जर्जरित
करोत्] प्रादुर्भवदिति—प्रकटीभवद्दीर्घनरकगतिपापबन्ध पिण्याकगन्ध समर्थे कुटुम्बपालनक्षमे सदाचारपाल
कृतार्थे जीवितसाफल्य कुर्वाणे, पुण्यकार्यं दानपूजादिक तद्भजतीति पुण्यभाक् तस्मिन् तुजि पुत्रे परम् अन्यत्
वचनम् अपश्यन् 'यदि चेत् इमौ क्रमौ चरणौ परिक्रमणक्षमौ परिक्रमण गमन तत्र क्षमौ समर्थौ मम न अभविष्
तदा कथकार किमर्थम् अह मन्मनोरथवन्ध्या' मन्मनोरथाना कारागारसदृश्या काकन्द्याम् अगमिष्यम् ।
एतौ एव पादौ अत्र श्रीविरामावहौ लक्ष्मीविनाशजनकौ द्रोहौ द्वेषरूपौ इति विचिन्त्य उद्वर्तन विलेपनम्
न्त्या मर्दयन्त्या स्वस्वामिन्या स्वपत्न्या करादाक्षिप्तशरीरेण बलाद्गृहीतेन शिलापुत्रकेण पेषणपाषाणेन
जर्जरितौ अकरोत् । [ इष्टकासु सुवर्णत्व निर्वर्ण्य राजा पिण्याकगन्धस्य सर्वस्वमपाहरत्, स च मृत्वा
जन्मालभत ] एतच्च वैदेहकव्यञ्जनपरिजनात् वैदयवेषधारिभृत्यजनात् रत्नप्रभो राजा अशृणोत् । कथभू
प्राचीनेति—प्राचीनबर्हीः इन्द्र. तस्य निभ तदुपम तत्सदृशो वा क्षितीति—क्षिति पृथ्वी एव रमणी
सा एव वरिणी हस्तिनी तस्या इभ गज रत्नप्रभ श्रुत्वा वासीवक्त्रेण कुठारिकामुखेन शिल्पिभि तक्षि
विधापितेति—कारितेष्टकाछेद नृप सुवर्णत्वं निश्चित्य विहितेति—कृतधनादिसकलवस्त्वपहारम्
कार सधिक्कार नगरेति—नागरिकजनेन उच्चार्यमाणदुरपवादाना घोष्यमाणवर्णाना प्रबन्धो विस्तारो यस्
पिण्याकगन्ध निरवासयत् स्वदेशात् निरघाटयत् । 'इन्द्रियम् अस्थानं हि गुणदोषयोर्महीपतय ' राजान
दोषयो अस्थानम् इन्द्रियम्' अस्थानेन यस्य नियत स्थान नास्ति तादृशेन इन्द्रियेण मनसा इन्द्रियेण गुणदो
विचार. क्रियते यथा तथा राजा जनाना गुणदोषौ अस्थानम् इन्द्रिय मन. भूत्वा विचारयति इति नीतिवा
अनुस्मृत्य मूलधनप्रदानेन राजा सुदत्तस्य मूलधन दत्वा समाश्वासयत् तथा अन्वयागतनिवासनिवेदनेन च
परम्परागतनिवासो भवतोऽत्रैव भवत्विति निवेदनं कृत्वा राजा सुदत्त साधु समाश्वासयत् । ,स तथा निर्वा
निर्घाटित सजातनरकनिषेकनिबन्ध सजात नरकस्य गते आस्रवस्य निश्चयेन बन्धो यस्य । कृतेति—
प्रकामम् अतिशयेन लोभेन सबन्धो येन स , चिरायेति—चिराय दीर्घकालावधिका उपार्जिता लब्धा दुर
दु खदोऽन्तो येषा तेषा दुष्कर्मणा स्कन्धा येन स पिण्याकगन्ध प्रेत्य मृत्वा पाताल श्वभ्र नरकम् अग
भवति चात्र श्लोक —षष्ठ्या क्षिते तम प्रभाया पृथिव्या दु खमल्लके दु खाना पात्रभूते अस्मिन्लल्लके न
इन्द्रकबिले धनायाविद्धचेतसा धनायया धनाभिलाषया आविद्ध भ्रान्तं चेत मनो यस्य तेन पिण्याकगन्धेन
अपतयत ।।४४७।।

इत्युपासकाध्ययने परिग्रहाग्रहफलफुल्लनो नाम द्वात्रिंशत्तम कल्प ।।३२।।

नमोऽर्हते स्वाहा। नीराजना नन्द्यावर्तेति—नन्द्यावर्त इति आकारविशेप सुवर्णादिपात्रे चन्दनगन्धेन मुक्ताकाररूपरेखाविशेप स्वस्तिक तु प्रसिद्धाकृतिकम्। फलानि आम्रादीनि। प्रसूनानि पुष्पाणि। अक्षता-स्तण्डुला। अम्बु जलम्। कुशपूलानि दर्भजूटानि। एभि वर्धमानैश्च शरावै। देव जिनेश्वरम् अवतारयामि ॥५४६॥ [ नीराजनमन्त्र —ॐ ह्रीं क्रो समस्तनीराजनाद्रव्यै· नीराजन करोमि दुरितमस्माकम् अपहरतु अपहरतु भगवान् स्वाहा। ] ॐ भक्तिभरेति— अस्य गद्यस्य 'मद्भाविलक्ष्मी'ति श्लोकेन संबन्ध। जिन चतुर्भि कुम्भै स्नपयामीति चतु कोणकलशाभिपेकः अनेन गद्येन श्लोकेन च प्रतिपादित। अधुना गद्य विव्रियते—ॐ भक्तिभरेति—भक्तिभरेण विनता नम्रा ये उरगाणा नागानाम् नराणा सुराणाम् असुराणाम् ईश्वरा अधिपतय शेपभूपतिदेवेन्द्रा सुरेन्द्रा तेपा शिरासि तेपा किरीटानि तेषा कोटय तेपु कल्पवृक्षकिसलयायमान पादयोर्युगल यस्य। पुन कथभूत जिनम् अमृताशनेति—अमृताशना देवा तेषा अङ्गना. देव्य। तासा करै विकीर्यमाणानि क्षिप्यमाणानि यानि मन्दारादिकल्पवृक्षाणा प्रसूनानि। तेभ्य स्पन्दमानस्य गलत मकरन्दस्य पुष्परसस्य स्वादात्पानात् उन्मदा मत्ता मिलन्त ये मत्तालय समदभ्रमरा तेपा कुलस्य प्रलाप झकार तेन उत्तालिता उत्साहिता ये निलिम्पा देवा तेपा लप्ति जिनगुणगणालाप तत्र व्यापारो गलो यत्र तथाभूत जिनम्। पुनरपि कथ भूतम्। अम्बरचरेति—अम्बरे नभसि चरन्ति इति अम्बरचरा विद्याधरास्तेपा कुमारा सूनव. तै हेलया लीलया आस्फालितानि ताडितानि वेणुवल्लक्यादिभेरी-भम्भाप्रभृतीनि यानि अनवधिघनसुपिरततावनद्धानि वाद्यानि तेपा नादेन निवेदित निरूपित निखिल-विष्टपाधिपाना सकलजगन्नायकानाम् उपासनावसर पूजनसमयो यस्य तम्। पुन कथभूतम्। अनेकामरेति—अनेके च ते अमरविकिरा देवपक्षिण तेपा श्रोटयश्चञ्चव ताभि कीर्णा इतस्ततो विक्षिप्तानि किशलयानि यस्य स अशोकश्चासौ अनोकह वृक्ष तस्य उल्लसन्त विकसन्तश्च ये प्रसवा पुष्पाणि तेपा परागो रज तेन पुनरुक्त. सकलदिक्पालहृदयरागस्य प्रसरो यस्मिन्विपये तम्। पुन कथभूतम्। अखिलेति—अखिल च तद्भुवनैश्वर्यं सकलजगद्विभव तस्य लाञ्छन चिह्न यत् आतपत्रत्रय छत्रत्रय तस्य शिखण्डे अग्रे मण्डनमणय भूपणरत्नानि तेपा मयूखा किरणा तेषा रेखाभि लिख्यमान स्पृश्यमान यन्मुख तेन मुखरा भापमाणा या खेचर्य नभोगनार्य तासा भालतलस्य ललाटपट्टतलस्य तिलकपत्रकं यत्र तथाभूत जिनम्। पुन कथ-भूतम्। अनवरतेति—अनवरत सततं यक्षै विक्षिप्यमाणा वीज्यमाना उभयपक्षयो पार्श्वद्वययो चामर-परम्परा चामराणा पङ्क्ति तस्या अंशुजालानि करसमूहा· तै धवलितानि विनेयजनाना तत्त्वार्थश्रद्धान-श्रवणग्रहणवता भव्यजनाना मन प्रासादचरित्राणि यत्र तथाभूतम्। पुन कथभूत जिनम्। अशेषेति—सकलप्रकटितवस्त्वतिशायिदेहकान्तिमण्डलपरिहृतसभागृहस्थितसम्यमतितम समूहम्। पुन कथ भूतम् जिनम्। अनवधीति—अवधिर्मर्यादा सा येपा नास्ति तेपा वस्तूना नि सीमपदार्थानाम् आत्मसात्कार कुर्वाणा निजाधीनता जनयन्ती सारा उत्तमा विस्फारिता वृद्धि प्राप्ता या सरस्वती तन्नामधारिणी सरिदिव शारदादेवी तस्या तरङ्गा वीचय तेपा सङ्ग सवन्ध तेन सतर्पिता सतोप नीता समस्तसत्त्वा सकल-प्राणिन एव सरोजानि कमलानि तेपाम् आकर समूहो यत्र तम्। पुन कथभूत जिनम्। इभारातीति—इभा हस्तिन तेषाम् अरातयो रिपव सिंहा तेपु परिवृढा श्रेष्ठा ये सिंहयूथस्वामिन तै उपवाह्यमान धार्यमाण यत् आसन पीठ तस्य अवसाने लग्नानि खचितानि यानि रत्नानि मणय तेपा करा रश्मय तेषा प्रसरेण पल्लवितं किसलयितं यद्वियदेव आकाशमेव पादपस्तरु तस्य आभागो विस्तारो यत्र। पुन कथभूत जिनम्। अनन्येति—अनन्यसामान्यम् अन्येन प्रासादादिना सामान्य सदृशम् अन्यसामान्य न अन्यसामान्यम् अनन्यसामान्यम् अनुपम च तत्समवसरण च सैव सभा रत्नमयी देवनिर्मिता सभा तस्याम् आसीना उपविष्टा ये मनुजा नरा दिविजा अमरा भुजङ्गा नागासुरा तेपाम् इन्द्रा स्वामिन तेपा वृन्द तेन वन्द्यमान पादार-विन्दयो चरणकमलयोर्युग्म यस्य त जिनम्। मद्भावीति—मम भाविलक्ष्मी भविष्यति काले प्राप्स्यमाना या लक्ष्मी सपद् सैव लतिका तस्या यद्वनम् आरामस्तस्य। प्रवर्धनेति—प्रवर्धनाय वृद्ध्यै आवर्जिता नम्रीभूता वारिपूरा जलप्रवाहा येपा तै चतुर्भि कुम्भै जिनं भगवन्त वीतराग स्नपयामि अभिपेचयामि। कथभूतै कुम्भै.

वृन्दम् येन त जिनम् । श्रीति—श्रीरेव मानस तन्नामक सरोवरम् तत्र कलहस मधुरशब्द कुर्वाण. हस इव जिन कुसुमसरै पुष्पहारै अर्चयामि ॥५५४॥ [मन्त्र.—ॐ ह्री अर्हन् सर्वनृसुरासुरपूजितेभ्य स्वाहा पुष्पाणि ।]

[ पृष्ठ २४० ] नैवेद्यपूजा अर्हन्तमिति—हविपा नैवेद्येन अर्हन्तम् आराधयामि । कथभूतम् अर्हन्तम्। अमितनीतिम् अमिता अनन्ता नीतय नया यस्य तम् अनन्तनयस्वरूपप्रतिपादकम् । निरञ्जनम् अञ्जनम् ज्ञानावरणादि कर्म तस्मात् निष्क्रान्तो निरञ्जन तम् । पुन कथभूतम् । आधिदावाग्ने 'आविर्ना मानसी व्यथा' इत्यमरः । आधय एव दावाग्निर्वनाग्निस्तस्य मिहिर प्रशमनकरणे मेघम् । पुन कथभूतम् । मुक्तिस्त्रीरमितमानसमनङ्गम् मुक्तिस्त्रिया रमित स्वस्मिन् अनुरक्त कृत मानस यस्य तम् ॥५५५॥ मन्त्र —ॐ ह्री अर्हन् नमोऽनन्तज्ञानेभ्य स्वाहा नैवेद्यम् । दीपपूजा भक्त्येति—जिन दीपै उपचरामि । कथभूतम् ? भक्त्या गुणानुरागपरिणामेन । आनता ईषत् नम्रीभूता ये अमरा देवास्तेषाम् आशया मनासि तान्येव कमलवनानि तेषा यत् अराल तिमिरम् उत्कटम् अज्ञानम् अविकासित्व वा तद्विनाशे मार्तण्ड रविसदृशम् । पुन कथभूतम् । सकलसुखानाम् अनन्तसौख्यानाम् आराम उपवनभूत स चासौ कामद ईप्सिताना दायक । अकाम न काम इच्छा यस्य तम् ॥५५६॥ मन्त्र —[ ॐ ह्री नमोऽनन्तदर्शनेभ्य स्वाहा दीपम् । ] धूपपूजा अनुपमेति—धूपैजिन यजामहे । कथभूतम् । अनुपमेति—अनुपमम् अप्रतिम केवलज्ञान वपुश्च शरीर यस्य तम् । सकलेति—सकलाश्च ता कला मतिज्ञानादयो अशा तेषा विलय नाश । क्षायोपशमिकज्ञानभेदा केवलज्ञाने समुत्पन्ने मति नावतिष्ठन्ते । सक्षीणसकलज्ञानावरणे भगवति अर्हति कथ क्षायोपशमिकाना ज्ञानाना सभव । न हि परिप्राप्तसर्वशुद्धौ पदे प्रदेशाशुद्धिरस्ति । अत सकलकलाविलयरूप केवलज्ञान तस्मिन्वर्तते यदात्मरूप य आत्मस्वभावस्तत्र तिष्ठतीति सकलकलाविलयवर्तिरूपस्थम् । पुन कथभूतम् । योगावगम्यनिलयम् । योगेन आत्मध्यानेन अवगम्यो निलय निवास मोक्षो यस्य तम् । पुन कथभूतम् । निखिलग सकलवस्तुपु ज्ञानेन गच्छति इति निखिलग तम् । विश्वतत्त्वाना ज्ञातारम् इति भाव ॥५५७॥ मन्त्र —[ ॐ ह्रीं अर्हम् नमोऽनन्तवीर्येभ्य स्वाहा, धूपम् । ] फलपूजा स्वर्गापवर्गेति—फलैर्जिनपतिमुपासे । कथभूतम् जिनम् । स्वर्गेति—स्वर्ग सुरलोक अपवर्गो मोक्ष तयो. सगति प्राप्ति विधायिन कुर्वन्तम् । पुन कथभूतम् । व्यस्तेति—व्यस्ता विनाशिता जातिर्जन्म मृतिर्मरणम्, दोषाश्च क्षुत्पिपासादयो येन तम् । पुन कथभूतम् । व्योमेति—व्योमचरा विद्याधरा अमरा चतुर्णिकायदेवा तेषा पतय विद्याधरचक्रवर्तिनो देवेन्द्राश्च तै स्मृतं चिन्तित जिन फलै उपासे पूजये ॥५५८॥ [मन्त्र —ॐ ह्री अर्हन् नमोऽनन्तसौख्येभ्य फलानि ।] अर्घम् अम्भश्चन्दनेति—अम्भ जलम् । चन्दन तन्दुलोद्गमहविर्दीपै उद्गमा पुष्पाणि हविर्नैवेद्यम् एभिर्द्रव्यै । तथा सधूपै फलै धूपेन सहितै फलै अष्टद्रव्यै । अर्चित्वा पूजयित्वा । क जिनपतिम् । कदा स्नानोत्सवानन्तरम् कथभूत जिनम् त्रिजगद्गुरुम् त्रैलोक्यनाथम् । जिन पूजयित्वा स्तौमि स्तुवे । प्रजपामि त प्रभुम्, चेतसि दधे । तदनन्तर श्रुताराधन श्रुतस्य जिनवाण्या आराधन पूजनम् कुर्वे । त्रैलोक्यप्रभव तन्मह तत्पूजनम्, कालत्रये श्रद्दधे ॥५५९॥ [मन्त्र —ॐ ह्रीं अर्हन्नम परममङ्गलेभ्य स्वाहा अर्घ्यम् ।] अष्टमङ्गलै पूजनम् यज्ञैरिति—अष्टविधपूजनै मुदा आनन्देन देव निरुपास्य पूजयित्वा । पुन. पुष्पाञ्जलिसमूहेन पूरितपादासन जिनानाम् इन स्वामिनम् श्वेतातपत्रचमरीरुहदर्पणाद्यै छत्रत्रयचामरादर्शाद्यै आराधयामि ॥५६०॥ पुष्पाञ्जलि । [मन्त्र —ॐ ह्रीं अर्हन्नमो ध्यातृभिरभीप्सितफलदेभ्य स्वाहा । पुष्पाञ्जलि' । इति पूजा ।]

[ पृष्ठ २४१ ] ६ पूजाफलम् । भक्तिरिति—जिनचरणयो जिनपदयो नित्य भक्ति सदा भक्तिरुपासना । सर्वसत्त्वेपु चतसृपु नरकादिगतिपु सीदन्तीति दु खमनुभवन्तीति सत्त्वा प्राणिन । सर्वे च ते सत्त्वाश्च सर्वसत्त्वा सकलजीवा । तेपु मैत्री तेपु दु खानुत्पत्तौ अभिलाप । सर्वत्र भूयादित्यनेन सवन्ध । सर्वातिथ्ये सर्वेपाम् आतिथ्ये गृहागते सकलाभ्यागतजने मम विभववी मम धनविनियोगो भवेदिति धीरभिप्रायो भूयात् । अध्यात्मतत्त्वे अध्यात्मशास्त्रनिगदितात्मस्वरूपे । मम बुद्धिर्भूयात् वर्तताम् । सद्विद्येपु सतो प्रशस्ता लोके धर्मोपदेशिनी विद्या येपा ते सद्विद्यास्तेपु प्रणयपरता प्रीतितत्परता । परार्थे परोपकारे चित्तवृत्ति मनोऽभिप्राय । हे भगवन्, यावत्काल त्वदीयं तव सवन्धि, धाम तेज भवति तावत्काल मम एतत् पद्यकथित

पुण्यपुण्यं भवतु ॥५६१॥ प्रातर्विधिरिति—हे देव मम प्रातर्विधिः प्रभातकालीनं कार्यम् । तव पादाम्बुज पूजनेन चरणकमलयोः पूजया यायात् व्यतीतो भवतु । अयं मध्याह्नसन्निधिः इयं मध्यदिनवेला मुनिमाननेन मुने यते मानमेन पूजया आहारदानेन । मम सायन्तनोऽपि समयः कालः देव त्वदाचरणकीर्तनकामितेन तव आचरणं प्रवृत्तपोध्यानादिकमं चारित्रं तस्य कीर्तनं प्रशंसा तस्य कामितेन इच्छया । जिनेन्द्रधर्म मम प्रवृत्तपोध्यानादिकं कृत्वा स्यादिति आर्यसनेन यायात् गच्छेत् ॥५६२॥ धर्मेष्विति—धर्मेषु उत्तमक्षमादि दशधर्माचरणेषु । धर्मनिरतात्मसु धर्मे रत्नत्रये निरताः आत्मा येषां ते धर्मनिरतात्मानः श्रावकाः श्राविकाः मुनयः आर्यिकाश्चेति चत्वारः संघास्तेषु । धर्मैहेतौ धर्माचरणसाधने जिनचैत्यालयादौ । नृपः अनुकूलः अस्तु । कथंभूतः सः ? धर्मावाप्तमहिमा धर्माचरणात्लब्धप्रभावः । तथा जिनेन्द्रेति—जिनपतिपदपूजनपुण्यात् अस्याः भुक्तवतस्य प्रजायाः चतुर्वर्णवत्याः नित्यं परमां श्रियम् उत्तमा श्रियं लक्ष्मी आप्नुवन्तु लभन्ताम् । इति पूजाफलम् ॥५६३॥ आलस्यात्—वपुषः आलस्यात् मान्द्यात् । कस्मादपि अनुत्साहत्वात् । हृषीकहरणैः हृषीकाणां नेत्रादीन्द्रियाणां हरणैः अन्योपयोगपरत्वात् । आत्मनः स्वस्य व्याक्षेपतो वा अन्यकार्यव्याकुलतया वा । मनसः चापल्यात् । मतेर्बुद्धेर्जडतया वस्तुस्वरूपानाकलनतया । वाक्सौष्ठवे मान्द्येन वचनस्य सौष्ठवं स्पष्टाक्षरवक्तृत्वं तस्मिन् मान्द्येन मुग्धवचनपरत्वेन । हे देव तव संस्तवेषु पूजादिकार्येषु एष प्रमादः अनवधानता समभूत् । स मे मिथ्या निष्फलः स्तात् भवतु । ननु निरवद्ये मताः देवताः प्रार्थिता प्रार्थनां कुर्वता भक्तया तुष्यन्ति प्रसन्ना भवन्ति ॥५६४॥ देवपूजामिति—यो गृहस्थः देवपूजाम् अर्हदादिजिनचतुष्टयपूजनम् अविरचय्य अकृत्वा मुनीन् उत्तमपात्रभूतान् यतीन् अनुपचर्य तेषाम् आहारदानप्रेक्षा अविधाय च भुञ्जीत भोजनं कुर्वीत स परं तम सत्पुरुष्टं तु स भुञ्जीत ॥५६५॥

इत्युपासकाध्ययने स्नपनार्चनविधिर्नाम षट्त्रिंशः कल्पः ॥३६॥

## ३७. स्नपनविधिनाम सप्तत्रिंशत्तमः कल्पः ।

[ पृष्ठ २४२ ] नमदिति—स जिनो देवः श्रीमान् सर्वोत्कर्षेण वर्तितीष्ट । यस्य अङ्घ्रियुगलं पद द्वन्द्वम् अवभासते शोभितायते । कुर्वेति चेद्गुम्फते-नमदिति—नमन्तः नमस्कुर्वन्तः ये अमराः देवाः मौलिमण्डले मुकुटसमूहे विलग्नानि खचितानि यानि रत्नानि मणयः तेषां अंशवः कराः तेषां निकरः समूहः तेन युक्तेऽस्मिन् गगने नर्मसि ॥५६६॥ सुरपतियुवतिमणसामिति—सुराणां गणः सुरपतयः सौधर्मादयः इन्द्राः तासां युवतयः सम्यानस्थो देव्यः तासां अवनतां कर्णानाम् । अमरेति—अमरतरुः कल्पवृक्षः तस्य स्मेरा विकासमाप्ता या मञ्जरी मञ्जु मनोज्ञा राजतीति मञ्जरी अविनयनिर्मिता आवलाः पुष्पमालाः कुसुमाः मञ्जर्यं तासां संस्पर्शेन रुचिरं मनोज्ञं यस्य चरणयोः पादयोः नखानां किरणजालम् । स जिनो जयति भुवने जगताम् सर्वोत्कर्षम् अवाप्नोतु ॥५६७॥ नमदिति सुरस्तोत्रि पदद्वयं वर्णकल्पादिविशेषणस्य । दिविजेति—दिवि जायन्ते इति दिविजाः देवाः तेषां कुञ्जरः गजः ऐरावणः तस्य मौली मस्तके यानि मन्दारादि मन्दार तरुपुष्पाणि तेभ्यो निर्गतस्य मकरन्दस्य रसस्य प्रस्रवणं तेन युक्ताः ये कर्णविवराः गुञ्जाश्रमराः तस्य भ्रमरेण धारासंपातेन भूनर नयाम्बुजे चरणकमले यस्य स तत्संबोधनीकवचन पदाम्बुज । वैराग्यपरमास्पद वैराग्यस्य विरक्तो विराग् तस्य भावो वैराग्यं वैगुण्यं तस्य परमपद उत्कृष्टाधार वैकल्यभावाधार । प्राप्तो भाति यथौ येन तत्संबोधनं प्राप्तवारमय । विजिनमवति जिनिन नराजितः मम भिक्ष भवति आपदं इति भर्माम्रिय भगवाः येन तत्संबोधनम् । मानायकम्प । भनुगती—यस्यामिति—हे जिन अमितगुणं त्वां जिता मानं यस्य गुणा यस्य न जितगुण न जितगुणोऽजितगुणः अनन्तगुणः त्वम् । स्वाम् अनन्तगुणं व्यक्तिकरणार्थविवेच अवनति प्राप्तः । जितजिन् कृपा विशेषं पश्यति येनापि विश्वपतीति जितजिन् । यदि स्तौमि त्वां भूनं तर्हि यतो जितजिन् इत्येन अविवादं धीमान् आप्तवतीय भुवनस्थलं भेदं गुणाणि जितजितिलोकनीति भानु

मिच्छति। हे भगवन्, तव गुणानां स्तवं कर्तुं वाञ्छन् जनः तत्पारं न कदापि प्राप्नोतीति ज्ञेयम् ॥५६८॥ स्तोत्रे इति—यत्र स्तोत्रे अनवधिबोधाः न अवधिर्बोधे ज्ञाने येषां ते अनवधिबोधाः अमितज्ञानिनः । चिन्ता स्तोत्रं भगवतो विधास्यामः इति तत्स्य मुमुचुः त्यक्तवन्तः । पुनः कथंभूताः । सकलैतिह्येति—ऐतिह्यं नाम आप्तोपदेशः श्रुतज्ञानं वा, स एव अम्बुधिः समुद्रः तस्य विधिः स्वाध्यायः तस्मिन् दक्षाश्चतुराः । महामुनिपक्षाः महामुनयो गणधरदेवादयः तत् पक्षम् अवलम्बमानाः तत्सदृशाः । चिन्ता तत्यजुस्तत्र तस्मिन् प्रभुस्तोत्रे मादृग्वेधा मत्सदृशः विद्वान् कथं चिन्तां न त्यजेत् ॥५६९॥ तदपीति—तदपि च तथापि च यद्यपि अहं गणधरादिसदृशमतिर्नास्मि । मयि तथा स्तवनशक्तिर्नास्ति । तथापि हे जिन, त्वयि विषये अहं किमपि वदेयं वच्मि । यत् यतः इयं भक्तिः मां मामम् अतिशयेन स्वस्य तूष्णीं न कुरुते । त्वयि विषये मद्भक्तिर्हे देव, किमपि स्तवनं कुरु इति मां प्रेरयत्येवेति भावः । अतोऽहं त्वां स्तोतुमुद्यतोऽस्मीति ॥५७०॥ सुरपतिविरचितेति—हे जिन, कः तव गुणः प्रवितनुतां स्तुतिपथं नयतु न कोऽपि । सुरपतिर्देवेन्द्रः तेन विरचितो विहितः संस्तवः स्तुतिः यस्य तत्सम्बोधनं हे सुरपतिविरचितसंस्तव दलितेति—दलितो विनाशितः अखिलो भवः संसारो येन तत्सम्बोधनम्, परमेति—परमम् अत्युत्तमं धाम वीर्यम् अनन्तशक्तिः तेन लब्धः उदयः प्रातिहार्यादिवैभवं येन । अघेति—अघं पापं तस्य हरणे नाशने चरणं चारित्रं यस्य तत्सम्बोधनम् । हे हतनतभय हतं नतानां नमतानां भयं येन तत्सम्बोधनम् हे हतनतभय । ॥५७१॥

[पृष्ठ २४३-२४४] जयेति—जयेति सर्वोत्कर्षेण वर्तस्व । कथंभूतस्त्वम् । निखिलेति निखिलाः सकलाः निलिम्पाः देवाः तेषाम् आलापः गुणस्तुतिः तत्र कल्पः योग्यः । जगतीति जगत्या विश्वेन विश्वेन, स्तुता चासौ कीर्तिश्च सैव कलत्रं भार्या सा तल्पे शय्यायां यस्य। जय सर्वोत्कर्षेण तथाभूतस्त्वं वर्तस्व । परमेति—परमश्चासौ धर्मश्च तदेव हर्म्यं प्रासादः तत्र अवतारः जन्म यस्य । लोकेति—लोकानां त्रितयं लोकत्रितयं जगत्त्रयं तस्योद्धरणे कुगतेरुद्धरणे सारो रत्नत्रयबलं यस्य सः । अत्र कल्प, तल्प, अवतार, सारेति शब्दानां सम्बोधनैकवचनानि ज्ञेयानि ॥५७२॥ जयेति—लक्ष्मीति लक्ष्म्या प्रातिहार्यलक्ष्म्या समवसरणरमायाश्च करौ हस्तौ तावेव कमले ताभ्याम् अर्चितं पूजितम् अङ्गं शरीरं यस्य तत्सम्बोधनम् । सारस्वतेति—सरस्वत्या अयं सारस्वतः स चासौ रसः तेन नटने नर्तने आद्यरङ्गः प्रथमा नर्तनभूमिः तत्सम्बोधनम् । केवलबोधे जाते सति द्वादशाङ्गश्रुतदेव्या जिनवदनं आद्यरङ्गभूमिर्जातमिति भावः । हे जिन जय सर्वोत्कर्षेण वर्तस्व । कथंभूत जिनसम्बोधनम् । बोधेतिबोधस्य केवलज्ञानस्य मध्ये सिद्धाः ज्ञाताः अखिलार्थाः सकलजीवादिवस्तुनिवहाः यस्य तत्सम्बोधनम् । मुक्तिश्रीति—मोक्षलक्ष्मीरमण्याः रत्या सम्भोगेन कृतार्थ कृतकृत्य तत्सम्बोधनम् हे जिन त्वं जय ॥५७३॥ नमदिति—नमन्तश्च ते अमराश्च नमदमराः नम्रीभूताः सुराः तेषां मौलयः किरीटानि तान्येव मन्दरस्य मेरोः तटान्ताः तत्र राजन्तः शोभमानाः पदयोः ये नखाः त एव नक्षत्रकान्तः चन्द्रो यस्य तत्सम्बोधनं हे राजत्पदनखनक्षत्रकान्त । विबुधेति—विबुधानां देवानां स्त्रियः तासां नेत्राण्येव अम्बुजानि कमलानि तानि विबोधयतीति विकासयतीति विबोध तत्सम्बोधनम् । मकरेति—मकरः ध्वजे यस्य मकरध्वजः कामः तस्य धनुः कोदण्डः तस्य उद्भवस्य उत्सवस्य निरोधः प्रतिबन्धः तत्सम्बोधनम् । हे जिन त्वं जय सर्वोत्कर्षेण वर्तस्व । कामविनाशक जिन त्वं सदा जयेति ॥५७४॥ बोधत्रयेति—बोधानां मतिश्रुतावधीनां त्रयं बोधत्रयं तेन विदितं ज्ञातं विधेयतन्त्रं कार्यपद्धतिर्येन तत्सम्बोधनम् । तव परत्र अन्यस्मिन् पुरुषे का नाम अपेक्षा । अन्यस्मात्पुरुषात् कार्यस्वरूपज्ञानस्य नापेक्षा भवत्यस्तीति भावः । अत्र निदर्शनम्—असुभृज्जनस्य प्राणिसमूहस्य प्रबोधं व्यपगतनिद्रावस्थां दधतः तन्वतः, अरुणस्य सूर्यसूतस्य कोऽपि गुरुः अस्ति किम् । नैव विद्यते स्वयं प्रकाशशील एव सः ॥५७५॥ निजबीजेति—महति महापुरुषे निजबीजबलात् निजं बीजं कारणं तस्य बलात् प्रभावात् सामर्थ्यात् मलिनापि धीः दोषवत्यपि मतिः हे अभव हे संसाररहित । परमां शुद्धिं भजति आश्रयते । अत्र निदर्शनम्—युक्ते अग्न्यादिकारणसामग्र्या कनकाश्मा सुवर्णपाषाणः हेम सुवर्णं सम्पद्यते । किं कोऽपि तत्र सुवर्णे विवदेत नाम, नेदं सुवर्णम् इति विप्रतिपत्तिं कुर्यात् किं कोऽपि । यस्मिन्नासन्नभव्यात्मनि मलिनापि धीः रत्नत्रयकारणानि सम्प्राप्य निर्मला भवति विधिज्ञत्वं प्राप्नोति ॥५७६॥ परिमाणमिवेति—यथा परिमाणं परमाणो

गुणपूर्णं भवतु ॥५६१॥ प्रातर्विधिरिति—हे देव मम प्रातर्विधिः प्रभातकालीनं कार्यम् । तव पादाम्बुजपूजनेन चरणकमलयोः पूजया भवतात् अतीतो भवतु । अयं मध्याह्नसंनिधिः इयं मध्याह्नवेला मुनिमाननेन मुनेः यतेः माननेन पूजया आहारदानेन । मम सायन्तनोऽपि समयः कालः देव त्वदाचरणकीर्तनकामितेन तव आचरणं व्रततपोध्यानादिकर्म चारित्रं तस्य कीर्तनं प्रशंसा तस्य कामितम् इच्छया । जिनेन्द्रसदृशं मम व्रततपोध्यानादिकं कदा स्यादिति भावनया भवतात् गच्छेत् ॥५६२॥ धर्मेष्विति—धर्मेषु उत्तमक्षमादिदशधर्माचरणेषु । धर्मनिरतात्मसु धर्मे रत्नत्रये निरताः आत्मानो येषां ते धर्मनिरतात्मानः श्रावकाः श्राविकाः मुनयः आर्यिकाश्चेति चत्वारः संघास्तेषु । धर्महेतौ धर्माचरणसाधने जिनचैत्यालयादौ । नृपः अनुकूलः अस्तु । कथंभूतः सः ? धर्मावाप्तमहिमा धर्माचरणात्समुत्पन्नप्रभावः । तथा जिनेन्द्रेति—जिनपतिपदपूजनपुण्यात् यस्याः मुक्तव्यसनाः प्रजाश्च चतुर्वर्णचरणाः नित्यं परमां श्रियम् उत्तमां श्रियं लक्ष्मीं प्राप्नुवन्तु लभन्ताम् । इति पूजाफलम् ॥५६३॥ आलस्यात्—वपुषः आलस्यात् मान्द्यात् । कर्मणि अनुरागाहत्वात् । हृषीकहरणैः हृषीकाणां नेत्रादीन्द्रियाणां हरणैः अन्योपयोगपरत्वात् । आत्मनः स्वस्य व्याक्षेपतो वा अन्यकार्यव्याकुलतया वा । मनसः चापल्यात् । मतेर्बुद्धेर्जडतया वस्तुस्वरूपानवकलनतया । वाक्सौष्ठवे मान्द्येन वचनस्य सौष्ठवं स्पष्टाक्षरत्वमधुरत्वं तस्मिन् मान्द्येन कुण्ठवागपटुत्वेन । हे देव तव संस्तवेषु पूजादिकार्येषु एष प्रमादः अनवधानता समभूत् । स मे मिथ्या निष्फलः स्तात् भवतु । ननु निश्चये यतः देवताः प्रणयिना प्रार्थनां कुर्वता भक्त्या तुष्यन्ति प्रसन्ना भवन्ति ॥५६४॥ देवपूजामिति—यो गृहस्थः देवपूजाम् अर्हदादिपञ्चपरमेष्ठिपूजनम् अनिर्माय अकृत्वा मुनीन् उत्तमपात्रभूतान् यतीन् अनुपचर्य तदीयाम् आहारदानसेवाम् अविधाय च भुञ्जीत भोजनं कुर्वीत स परं तमः अत्युत्कृष्टं दुःखं भुञ्जीत ॥५६५॥

इत्युपासकाध्ययने स्नपनार्चनाविधिर्नाम षट्त्रिंशः कल्पः ॥३६॥

## ३७ स्तवनविधिर्नाम सप्तत्रिंशत्तमः कल्पः ।

[ पृष्ठ २४२ ] नमदिति—स जिनो देवः श्रीयात् सर्वोत्कर्षेण वर्तिषीष्ट । यस्य अङ्घ्रियुगलं पदद्वयम् अरुणायते लोहितायते । कुत इति चेदुच्यते—नमदिति—नमन्तः नमस्कुर्वन्तः ये अमराः देवाः मौलिमण्डले मुकुटसमूहे निबद्धानि खचितानि यानि रत्नानि मणयः तेषां अंशवः कराः तेषां निकरः समूहः तेन युक्तेऽस्मिन् गगने नभसि ॥५६६॥ सुरपतियुवतिप्रवरसामिति—सुराणां पतयः सुरपतयः सौधर्मेन्द्रादयः इन्द्राः तासां युवतयः अप्सरसो देव्यः तासां नवता कपोलानाम् । अमरेति—अमरतरुः कल्पवृक्षः तस्य स्मेराः विकासमाप्ताः याः मञ्जर्यः मञ्जु मनोज्ञता राति ददातीति मञ्जर्यः अभिनवनिर्गताः आयताः सुकुमाराः सुकुसुमाः मञ्जर्यः तासां संस्पर्शेन रुचिरं मनोज्ञं यस्य चरणयोः पादयोः नखानां किरणजालम् । स जिनो जगति भूतले जगतात् सर्वोत्कर्षम् अवाप्नोतु ॥५६७॥ 'नमदिति सुरपतीति' पद्ययुग्मं वर्णच्छन्दोविशेषात्मकम् । दिविजेति—दिवि आकाशे इति दिविजाः देवाः तेषां कुञ्जरः गजः ऐरावणः तस्य मौलौ मस्तके यानि मन्दाराणि मन्दारकुसुमानि तेभ्यो निर्गतस्य मकरन्दस्य स्यन्दः प्रस्रवणं तेन युक्ताः ये करनिकराः शुण्डासमूहाः तस्य आसारेण धारासंपातेन धूसरे पदाम्बुजे चरणकमले यस्य सः तत्संबोधनैकवचनं पदाम्बुज । वैराग्यपरमपद वैराग्यस्य विरक्तो विरागः तस्य भावो वैराग्यं वैमुख्यं तस्य परमपद उत्तमाधार केवलज्ञानाधार । प्राप्तो पारे अवधौ येन तत्संबोधनं प्राप्तपारगम । विजितमनसिज विजितः पराजितः मनसिजः मनसि जायते इति मनसिजः मन्मथः येन तत्संबोधनम् । भावाभ्यर्च्य । चतुष्पदी—यस्त्वामिति—हे जिन अमितगुणं त्वां नितरां मातुं यस्या गुणा यस्य स मितगुणः न मितगुणोऽमितगुणः अनन्तगुणः त्वम् । त्वाम् अनन्तगुणं स्तवितुमविषयोऽपि तस्यापि दासः । विपश्चित् बुधः विशेषं पश्यति चेतति चिन्तयतीति विपश्चित् । यदि स्तौति त्वां नूनं तर्हि असौ विपश्चित् हठेन अचिरकालं धैर्यं वाञ्छनीयं गुणपर्वतं मेरुं तुलयति क्षिप्तपरिमाणोऽस्तीति आशु

उशन्ति ब्रुवन्ति ॥५८४॥ अद्वैतम्' इति—कोऽपि ब्रह्माद्वैतवादी अद्वैत तत्त्व वदति । सोऽपि सुधियां सुष्ठु धीः बुद्धि येषा ते सुधिय. तेषा सुधिया विदुषाम् । धिय बुद्धिम् । न आतनुते न विस्तारयति । अद्वैतिनो मत सुधीभ्यो न रोचते इति भाव । यत यस्मात् । हे शिवशर्मसदन मुक्तिसुखाना गृहीभूत जिनेश्वर । अत्र अद्वैत-मते पक्षस्य, हेतो, दृष्टान्तस्य, वचनस्य सस्था स्थिति कुतो भवेत् ? द्वैते एव पक्षहेतुदृष्टान्ताना सभव । नास्ति तत्सभवोऽद्वैते ॥५८५॥ हेताविति—हेतौ सति कारणहेतौ कार्यहेतौ विद्यमाने अनेकधर्मसिद्धि भवति। कार्याणि दृष्ट्वा कारणान्यनुमीयन्ते । समर्थकारणे सति कार्यम् अवश्य भवति। जिनेश्वर एवम् अनेकधर्मप्रवृद्धि जीवादिसप्ततत्त्वाना सिद्धिम् आख्याति कथयति। विशिष्टधर्मलक्षणसद्भावात् पृथक्-पृथक् तत्त्वसिद्धि भवति। यथा ज्ञानधर्म जीवतत्त्व निश्चिनोति। स्पर्शादयो धर्मा पुद्गलतत्त्वम्। अन्यत् पुन कथचित् नित्यम् कथचित् अनित्यम्, कथचित् भिन्नम् कथचित् अभिन्नम्। अखिलमतव्यतीत नित्याद्येकान्तमत-भिन्नम्। हे उरुनयनिकेत उरवो महान्तः ते च ते नयाश्च नैगमादयः। तेषा निकेत गृहभूत हे जिन तव मतम् उद्भाति प्रकर्षेण शोभते ॥५८६॥

[ पृष्ठ २४७-२४९ ] मनुजत्वमिति—मनुजत्व पूर्वम् आदौ यस्य एतादृश । नयनायकस्य सकलनैगमादिनयानाम् अधीशस्य सकलनयचक्रस्य ज्ञातु । गुणोत्तमस्य गुणाना केवलज्ञानदर्शनशक्तिसुखानाम् अनन्ताना प्राप्तेरुत्तमस्य श्रेष्ठत्व प्राप्तस्य । भवतीति भवन् तस्य भवत सत, भवतः पूज्यस्य । ये द्वेषकलुष-धिषणा वैरमलिनमतय भवन्ति ते भवन्त रहन्ति त्यजन्ति । ते जडज मौक्तिकमपि रहन्ति । जलज मौक्तिक मत्वा रहन्ति त्यजन्ति । यथा कश्चित् मूर्ख जलान्मौक्तिक जात वीक्ष्य जलवत्तत्यजति तथा भवान् आदौ मनुष्य आसीत् तदनन्तरं घातिकर्मक्षय कृत्वा नयनायको जात पर द्वेषिण मनुष्योऽयमिति मत्वा अवमत्य भवत अवमानन कुर्वन्ति । अहो मूढत्व तेषाम् ॥५८७॥ नाप्तेषु इति—य एकम् ईश्वर एव आप्त मन्यते स आप्तेषु बहुत्व न सहेत । पर्यायविभूतिष्वपि न महेत । पर्याया ईश्वरस्य वराहाद्यवतारास्तेषा विभूतिषु वैभवेषु स न महेत पूजयेत ? अपि तु न पूजयेत् । यत स एकम् ईश्वर विना अन्यान् तदवतारानपि आप्तरूपान् अमन्यमान कथ पूजयेत् । नून द्रुहिणादिषु तथाविधेषु दैवतेषु तस्य क स्फुटति । तथाविधेषु ईश्वरावतारेषु दैवतेषु देवमन्येषु तस्य एकमेवाप्त मन्यमानस्य नु क मस्तक कथ स्फुटति कथ नमति नैव नमेत् ॥५८८॥ दीक्षास्विति—हे इन हे प्रभो, सकलगुणै व्रततप समित्यादिगुणै रत्नत्रयरूपै अहीन न हीन न अपूर्ण तत्सबोधन हे अहीन, दीक्षासु महाव्रतदीक्षासु, अणुव्रतदीक्षासु च । तपसि अनशनादिके द्वादशविधे, वचसि च पूर्वापरविरोधानवकाशे यत् यस्मात् इह ऐक्यम् एकरूपता अविरोधता वर्तते । तस्मात् बुधोचितपादसेव बुधै-रुचिता कर्तुं योग्या पादयो सेवा यस्य स तत्सबोधनम्, बुधोचितपादसेव । त्वमेव जगता नाथोऽसि इति ब्रवीमि । अन्येषा हरिहरादीना दीक्षातपोवचःसु ऐक्य नैवातस्ते त्रैलोक्यस्वामित्वानर्हा एव ॥५८९॥ देवेति—हे देव दीव्यति क्रीडति परमानन्दपदे इति देव परमाराध्य तत्सबोधन हे देव । तथापि कोऽपि नर त्वयि विमुखचित्त पराङ्मुखमना भवति तर्हि स एव निन्द्यो भवति । विदलितेति—विदलिता विनाशिताः मदनस्य विशिखा बाणा येन स तत्सबोधनम्, हे जिन, घूके दिवापि विदृशि नेत्ररहिते यथा निन्द्य तथा त्वयि विमुखचित्तो नर निन्द्य एव । पर य विदृशोन (?) अन्धाना स्वामी त न कोऽपि उपालभते दूषण ददाति । दिवा दिने घूके विदृशि अन्धेऽपि इन सूर्यं स उपलभते पर अन्य कोऽपि सूर्यं न निन्दति ॥५९०॥ निष्किंचन इति—निष्किंचनोऽपि न किंचन धनधान्यादिपरिग्रहो यस्य । निर्गत किंचनात् असौ निष्किंचन निष्परि-ग्रहोऽपि त्व जिन जगते त्रिलोकाय कामितानि अभिलषितानि निकाम यथेष्ट न दिशसि न ददासि । भक्ता-नाम् अभिलषितानि त्व निष्परिग्रहोऽपि पूरयस्येव । अत्र चित्र विस्मयो नैव । अथवा इह खात् आकाशात् शून्यस्वरूपादपि वृष्टि किमु नो समस्ति नो चकास्ति न शोभते अपितु शोभते एव । पद्धतिकाछन्द ॥५९१॥ इति—एव तदमृतनाथ तत्तस्मात् अमृतनाथ अमृतस्य मोक्षस्य नाथ स्वामिन् । स्मरशरमाथ, स्मरस्य कामस्य शरान् उन्मादमोहनसन्तापनादीन् बाणान् मथ्नाति पीडयतीति स्मरशरमाथ । तत्सबोधन हे स्मरशरमाथ । त्रिभुवनपतिमतिकेतन त्रिभुवनस्य पतय स्वामिन धरणेन्द्रादय' तेषा मते मान्यताया निकेतन गृहम् तत्सबो-

गर्भमानम् अतिशयेन विभति आकाशे पुस्तो महत्तमताम् उपैति प्राप्नोति । तथा मति अतिशयेन गर्भमाणा गरि कस्मिंश्चिदात्मनि उत्कर्षं गुरुताम् उपैति प्राप्नोति । तत् तस्मात्कारणात् शिवस्य सर्वज्ञ निषेधतो मीमांसकस्य विश्ववेदिनिन्दा सर्वज्ञनिन्दा हे देव कस्य चित्ते विभ्रमात्मति तिष्ठति । स्थाने न लभते इति भाव । दोषावरणयोर्हानि सेवमानात् कश्चिदात्मा सर्वज्ञो भवत्येव ॥५७७॥ कपिलो यदि इति—यदि कपिल साङ्ख्यदर्शनस्य प्रणेता अपिति अचेतने प्रधाने विति ज्ञानम् इच्छति तर्हि स सुरगुरोर्गुम्फेष्वेव पतति सुराणां देवानां गुरु सपाध्याय बृहस्पतिः तस्य यो दर्शन चार्वाकदर्शनं तस्य गुम्फेषु रचनासु एव कपिल पतति इति मन्यामहे वयम् । स च बृहस्पति जीवच्छरीरमेवात्मा नान्यो भिन्न कश्चिदात्मा नाम स च आत्मा गर्भादिमरणपर्यन्तमेव गर्भात्पूर्वं मरणाच्चोत्तरं नास्ति भवान्तरम् । इति मन्यते । कपिलोऽपि—प्रकृतौ अचेतनायां ज्ञत्वं मन्यमान बृहस्पतिमनुसरति । हे विविद हे सर्वज्ञ अर्हन्, चैतन्यं केवलं स्वरूपमात्रपरिच्छेदि बाह्यग्राह्यरहितं घटपटादिविषयाग्राहकम् अग्राहकं तर्हि तत् कस्य उपयोगि स्यात् ? न अतः हे अर्हन् भवानेव यथार्थदर्शी । आत्मा एव दोषावरणहाने सर्वज्ञो जायते इति भवति तदेव सत्यम् ॥५७८॥ भूपवनेति—भू पृथ्वी पवनो वायु वनं जलम्, अनलोऽग्नि इति तत्त्वान्येव तत्त्वकानि तेषु तत्त्वकेषु । चिपन बृहस्पति विमार्ग निर्भ्रान्ति प्रतिपादयति । एतत्तत्त्वचतुष्टयम् इति वदति । परन्तु तद्विपरीतधर्मवान्निः एभ्यः विपरीतस्वभावस्तत्त्वे चिति आत्मनि विमार्ग न ब्रवीति । ज्ञानं भूतचतुष्टयात्भिन्नं नेति मन्यते तत्तु तेभ्य उत्पद्यते इति मन्यते । तज्ज्ञानं तस्य भूतचतुष्टयस्य कथं कार्यं भवतु परं तत् आत्मनो धर्म न भूपवनादीनां इति ज्ञेयम् ॥५७९॥

[ पृष्ठ २४८-२४९ ] विज्ञानप्रमुखाः इति—विज्ञानं प्रमुखं येषु ते विज्ञानप्रमुखा बुद्ध्यादय गुणा । विमुक्ति विशेषेण मुच्यति इति विमुक् तस्मिन् विमुक्ति मुक्तात्मनि न सन्ति । इति यस्य वाचि व्याख्याने किल नय वर्तते । मुक्तौ बुद्धिसुखदुःखादीनां नवानां गुणानाम् अत्यन्तोच्छेदान्मोक्ष इति वैशेषिको वदति । तस्य मते मुक्तौ गुणा न तिष्ठन्ति इति तत्र गुणत्वावस्थाया गुणानपि आत्मापि नैवेति मन्यताम् । यतस्तु औष्ण्यात् ऋतेऽग्नि अपरत्र अन्यत्र क तिष्ठति ॥५८० ॥ धरणीधरेति—धरणीधर पर्वत धरणि पृथ्वी प्रभृतय तरुलतादय तान् निरिह शंकर ईश्वर सृजति । ननु निपगृहादि घटगृहादिकं निरिह करोति इति वचनम्यम् । यदि सकलमेव कर्म निरिहा करोति तर्हि तपादीनां किं प्रयोजनम् । चित्रम् आश्चर्यं वर्तते । यत् यत तदपि लोकेषु महामसादि महाकोटिमन्ति सन्ति ॥५८१॥ पुरुषत्रयमिति—हरिहर ब्रह्माण पुरुषत्रयम् । भवकायस्तमूर्ति भवभासु लक्ष्मीपार्वतीसावित्र्यादिषु नारीषु आसक्ता मूर्ति शरीरं यस्य तत् । अत एतत्त्रय धामभस्य कर्तृ न संभवति । त्रैलोक्यस्यापि न तत्र कर्तृत्वं संभवेत् । अपरः शरीररहित अनादिमुक्त ईश्वर सृष्टिकर्ता नैवकर्ता वा स्यात् इति च नैव संभवति । अत स भवकामकीर्ति भवनाथ नमस्करोऽर इति यस्य कीर्ति भवति पद्ये । एवं सति हे नाथ जिन जग जयति भवतिम् । द्विजसुत ब्राह्मणानां वैदिकं कथं हिंसाहिंसाविषयम् आभाति योजते । वैदस्य ईश्वरकृतत्वं न संभवति । तदत्र स हिंसाहिते न कुर्यात् ॥५८२॥ सोऽहमिति—हे बौद्ध य अहं बाल्यवयसि बाल्यावस्थायाम् अभूवं प्राग् आसम् स एव अहम् इति निरिचन्वन् निश्चयं कुर्वन् क्षणिकमतं जहाति । सर्वं क्षणिकं सत्त्वात् इत्यनुमानेन नित्यं स्वरूप तत्र आत्मनः स्वरूपं क्षणिकं नैव सिद्ध्येत् । सर्वथा क्षणिके आत्मनि सन्तानोऽपि अत्र न स्यात् । अपरामृष्ट भेदा कार्यकारणतया संतानः इत्यपि सन्तानलक्षणं नैव सिद्ध्यति । एकस्याभावे निरन्वयाभावे च पूर्वक्षण कारणम् उत्तरक्षण कार्यम् इति न भवेत् । तत कार्यकारणभावाभावात् सन्तानसिद्धि न । अस्थिरे वासनापि न । यदि अन्वय पूर्वापरीभावस्य तेनापि प्रयोजनसिद्धिर्न । अन्वये सति सर्वथा क्षणिकत्वं हीयते । क्षणिकमतप्रतिपादकेन सुगतेन तेन अन्वयभाव नापि न प्राप्त ॥५८३॥ चित्तमिति—चित्तं ज्ञानम् । कर्मभूत तत् । अचलम् इन्द्रियोत्पन्नम् । तत् विचारकं न पूर्वापरालोचनसमर्थं न । अचिन्तं सविकल्पं ज्ञानम् । तोयपतितसोमा घटादय स्थिरस्थूलाकाराणां सामान्यरूपा तत्र पतितम् तद्ग्राहकम् अस्ति । तेन क्षणिका चित्ताधार परमाणव न गृह्यन्ते । तदविकल्पं ज्ञानं वस्त्वालोकम् अभ्रान्तं नास्ति । क्षणिकानि तत्त्वा विविक्तस्वभावं क्षणिकं वस्तु च न स्पृशन्ति । अत धारया बौद्धा तानि वचनानि आत्मविहीनानि बौद्धहितानि वचनम्

सिद्धक्रमैरेव, यथा मन्त्राणा क्रम प्राचाम् आचार्याणा मते सिद्ध तथैव तमाश्रित्यैव जप कार्य: इति निगिरामि। यथागमे जपविषये क्रम श्रूयते तथा स जपो जप्य ॥५९८॥ पातालेति—पातालेषु भावनेषु। मर्त्येषु मनुजेषु। खेचरेषु विद्याधरेषु सुरेषु देवेषु सिद्धक्रमस्य मन्त्रस्य ससिद्धे' सिद्धिर्भवतीति हेतो अधिगानात् प्रामाण्यात अधिकप्रतिपत्ते' आदरात् समवाये जनसमुदाये, देवयात्रायाम् देवप्रतिष्ठादौ। सिद्धक्रमस्य मन्त्रस्यैव प्रामाण्य श्रूयते ॥५९९॥ जपकरणविधि —पुष्पैरिति—पर्यङ्कस्य पद्मासनेन स्थित निष्कम्पितम् अचलितम् अक्षवलयम् अक्षाणाम् इन्द्रियाणा वलय येन सर्वाणि इन्द्रियाणि सयम्य जप कुर्यादिति भाव । कै जपो विधेय इत्याह—पुष्पै कुसुमै, पर्वभि अङ्गुलिग्रन्थिभि, अम्बुजबीजै कमलबीजै, स्वर्णमणिभि, अर्ककान्तरत्नैर्वा सूर्यकान्तमणिभिर्वा जप कार्य । अथवा निष्कम्पितम् अचलितम् अक्षवलयम् जपमाला यस्य स जपी जप कुर्यात्। कमलबीजमालया, स्वर्णमणिमालया, सूर्यकान्तमणिमालया वा जपो विधीयेत जपिना ॥६००॥ अङ्गुष्ठे इति—मोक्षार्थी इदम् अक्षवलय जपमालाग्यम्, अङ्गुष्ठे तथा तर्जन्याम् अङ्गुष्ठसमीपाङ्गुल्या बहि बाह्ये नयतु सचारयतु। पुन ऐहिकापेक्षी धनधान्याद्यपेक्षा कुर्वाण इतरासु अङ्गुलीषु मध्यमानामिकाद्यङ्गुलीषु अन्त वहिश्च ता नयतु सचारयतु। (जाप्ये कृते सति वहिर्वस्तु उच्चाटनीय जाप्य प्रापयतु इति-टिप्पण्याम्) ॥६०१॥ वचसेति—वचसा वाण्या, मनसा वा चित्तेन वा समाहितस्वान्तै ध्येये निश्चलीकृतमनोभि, जाप्य कार्य जपो विधातव्य:, आद्ये जाप्ये वाण्या कृते जाप्ये शतगुण पुण्यम्, द्वितीये मनसा कृते जाप्ये वचनमनुक्त्वा विधेये जाप्ये सहस्रगुणित पुण्य जायते। वच कृते जाप्ये मनस स्थिरत्वात् शतगुण पुण्यं मनोविहितजाप्ये ततोऽपि मनस स्थिरतरत्वात् सहस्रगुण पुण्य लभ्यते ॥६०२॥ नियमितेति—नियमित' स्वस्वविषयादाकृष्य आत्मनि नियन्त्रित करणग्राम इन्द्रियगणो येन। स्थानेति जिनालयादिक स्थानम्। पद्मासनादिकम् आसनम्। मानसस्य चित्तस्य प्रचार नाभिनेत्रललाटादिषु सचारण मन प्रचार इत्यादिजप साधनानि जानन्। पुन कथभूत । पवनेति—कुम्भकरेचकादिवायुधारणरेचनाद्युपायज्ञ पुमान् सम्यक्सिद्ध भवेत् अशेषज्ञश्च स्यात् ॥६०३॥ इममेवेति—पञ्चत्रिंशत्प्रकारवर्णस्य पञ्चाधिकत्रिंशदक्षरोपेतम् इममेव मन्त्र 'णमो-अरिहताण' इत्यादिरूप प्रसिद्धम्। मुनय परमपदावाप्तये मुक्तिपदलाभाय। विधिवत् नियमितकरणग्राम इति श्लोकोक्तविधिमनुसृत्य जपन्ति ॥६०४॥ मन्त्राणामिति—अखिलाना मन्त्राणाम् अय एक पञ्चनमस्कार-मन्त्र सिद्ध सन् कार्यकृद्भवेत् इष्ट कार्यं कुर्यात्। परे तु सर्वे मन्त्रा अस्य णमो अरिहताण एतावन्मात्रस्य एकदेशकार्यं न कुर्यु । सर्वेषु मन्त्रेषु अयमेव मन्त्र श्रेष्ठ ॥६०५॥ कुर्यादिति—अङ्गुष्ठमारभ्य कनिष्ठिका-पर्यन्त करयो वामदक्षिणकरयो प्रकारयुगलेन (?) विधिपूर्वकाङ्गुलिरेपा करन्यास कुर्यात्। न्यास कृत्वा पञ्चनमस्कारमन्त्रम् उभयकरयोरङ्गुलीषु लिखित्वा। तदनु हृदाननमस्तककवचास्त्रविधि मनोमुखशिर सु कवचविधिम् अस्त्रविधि च कुर्यात्। कवचस्य विधि क देह वञ्चति विपक्षास्त्राणि वञ्चयित्वा रक्षति इति कवच तस्य विधि मन्त्रोच्चारेण सकलीकरणविधान विधातव्य:। एतत्सर्वं जपात्पूर्वं विधातव्यमित्यर्थ ॥६०६॥ संपूर्णेति—सपूर्णमति स्पष्ट। सनाद विन्दुसहित ॐकार पञ्चपरमेष्ठिवाचकम्, आनन्दसुन्दरम् आनन्देन आत्मानुभवसुखेन सुन्दर रमणीयम्। जपत अस्य मुनेरुपासकस्य वा सर्वेषा समीहितानाम् अभिलषितानाम् अभ्युदयनि श्रेयसा सिद्धि प्राप्ति नि सशय सजायेत भवेत् ॥६०७॥ मन्त्र इति—परत्र मन्त्रे अन्यस्मिन्मन्त्रे ऋषिमण्डलादिमन्त्रे। फलोपलम्भे अभिलषितप्राप्तौ सत्यामपि। अयमेव पञ्चपरमेष्ठिमन्त्र सेव्य आराध्य । यद्यपि अग्रे शाखादिषु । विटपी वृक्ष । फलति प्रादुर्भूतफलो भवति। तथापि तस्य वृक्षस्य मूल जलेन सिच्यते। तदसिञ्चने न फलोपलब्धिस्तथा अस्मिन्मन्त्रे सेव्यमाने इतरेभ्य एतन्मूलकेभ्यो मन्त्रेभ्य फललाभो भवेत् ॥६०८॥ अत्रामुत्रेति—गुरुपञ्चकवाचकान्मन्त्रात् पञ्चपरमेष्ठिमन्त्रात् । आरोपमन्त्र अत्र अस्मिन् लोके। परत्र च स्वर्गादौ च। नियत निश्चयेन कामितफलसिद्धये अभीष्टफललाभाय। नाभूत् नाभवत्। नास्ति न भवति। न भविष्यति च ॥६०९॥ अभिलषितेति—अस्मिन् मन्त्रे इष्टपदार्थदाने सुरगोसदृशे सति कामधेनुसदृशे सति तथा अस्मिन्मन्त्रे दुरित पाप तदेव द्रुम तरु तस्य पावकेऽग्निसदृशे सति। दृष्टादृष्टफले दृष्ट लब्धम् ऐहलौकिकं धनादिकम् अदृष्ट पारलौकिक स्वर्गादिफल यस्य तथाभूते सति परत्रमन्त्रे

सिद्धक्रमैरेव, यथा मन्त्राणा क्रम प्राचाम् आचार्याणा मते सिद्ध तथैव तमाश्रित्यैव जप कार्यः इति निगिरामि। यथागमे जपविषये क्रम श्रूयते तथा स जपो जप्य ॥५९८॥ पातालेति—पातालेषु भावनेषु। मर्त्येषु मनुजेषु। खेचरेषु विद्याधरेषु सुरेषु देवेषु सिद्धक्रमस्य मन्त्रस्य ससिद्धे सिद्धिर्भवतीति हेतो. अविगानात् प्रामाण्यात् अधिकप्रतिपत्ते आदरात् समवाये जनसमुदाये, देवयात्रायाम् देवप्रतिष्ठादौ। सिद्धक्रमस्य मन्त्रस्यैव प्रामाण्य श्रूयते ॥५९९॥ जपकरणविधि —पुष्पैरिति—पर्यङ्कस्य पद्मासनेन स्थित निष्कम्पितम् अचलितम् अक्षवलयम् अक्षाणाम् इन्द्रियाणा वलय येन सर्वाणि इन्द्रियाणि सयम्य जप कुर्यादिति भाव। कै जपो विधेय इत्याह—पुष्पै कुसुमै, पर्वभि अङ्गुलिग्रन्थिभि, अम्बुजबीजै कमलबीजै, स्वर्णमणिभि, अर्ककान्तरत्नैर्वा सूर्यकान्तमणिभिर्वा जप कार्य। अथवा निष्कम्पितम् अचलितम् अक्षवलयम् जपमाला यस्य स जपी जप कुर्यात्। कमलबीजमालया, स्वर्णमणिमालया, सूर्यकान्तमणिमालया वा जपो विधीयेत जपिना ॥६००॥ अङ्गुष्ठे इति—मोक्षार्थी इदम् अक्षवलय जपमालारूपम्, अङ्गुष्ठे तथा तर्जन्याम् अङ्गुष्ठसमीपाङ्गुल्या बहि बाह्ये नयतु सचारयतु। पुन ऐहिकापेक्षी धनधान्याद्यपेक्षा कुर्वाण इतरासु अङ्गुलीषु मध्यमानामिकाद्यङ्गुलीषु अन्त वहिश्च ता नयतु सचारयतु। (जाप्ये कृते सति वहिर्वस्तु उच्चाटनीय जाप्य प्रापयतु इति-टिप्पण्याम्) ॥६०१॥ वचसेति—वचसा वाण्या, मनसा वा चित्तेन वा समाहितस्वान्तै ध्येये निश्चलीकृतमनोभि, जाप्य कार्य जपो विधातव्य, आद्ये जाप्ये वाण्या कृते जाप्ये शतगुण पुण्यम्, द्वितीये मनसा कृते जाप्ये वचनमनुक्त्वा विधेये जाप्ये सहस्रगुणित पुण्य जायते। वच कृते जाप्ये मनस स्थिरत्वात् शतगुण पुण्य मनोविहितजाप्ये ततोऽपि मनस स्थिरतरत्वात् सहस्रगुण पुण्य लभ्यते ॥६०२॥ नियमितेति—नियमित· स्वस्वविषयादाकृष्य आत्मनि नियन्त्रित करणग्राम इन्द्रियगणो येन। स्थानेति जिनालयादिक स्थानम्। पद्मासनादिकम् आसनम्। मानसस्य चित्तस्य प्रचार नाभिनेत्रललाटादिषु सचारण मन प्रचार इत्यादिजप साधनानि जानन्। पुन कथभूत। पवनेति—कुम्भकरेचकादिवायुधारणरेचनाद्युपायज्ञ पुमान् सम्यक्सिद्ध भवेत् अशेपज्ञश्च स्यात् ॥६०३॥ इममेवेति—पञ्चत्रिंशत्प्रकारवर्णस्थं पञ्चाधिकत्रिंशदक्षरोपेतम् इममेव मन्त्र 'णमो-अरिहताण' इत्यादिरूप प्रसिद्धम्। मुनय परमपदावाप्तये मुक्तिपदलाभाय। विधिवत् नियमितकरणग्राम इति श्लोकोक्तविधिमनुसृत्य जपन्ति ॥६०४॥ मन्त्राणामिति—अखिलाना मन्त्राणाम् अय एक पञ्चनमस्कार-मन्त्र· सिद्ध सन् कार्यकृद्भवेत् इष्ट कार्यं कुर्यात्। परे तु सर्वे मन्त्रा अस्य णमो अरिहताण एतावन्मात्रस्य एकदेशकार्यं न कुर्यु। सर्वेषु मन्त्रेषु अयमेव मन्त्र· श्रेष्ठ ॥६०५॥ कुर्यादिति—अङ्गुष्ठमारभ्य कनिष्ठिका-पर्यन्त करयो वामदक्षिणकरयो प्रकारयुगलेन (?) विधिपूर्वकाङ्गुलिरेपा करन्यास कुर्यात्। न्यास कृत्वा पञ्चनमस्कारमन्त्रम् उभयकरयोरङ्गुलीषु लिखित्वा। तदनु हृदाननमस्तककवचास्त्रविधि मनोमुखशिर सु कवचविधिम् अस्त्रविधि च कुर्यात्। कवचस्य विधि क देह वञ्चति विपक्षास्त्राणि वञ्चयित्वा रक्षति इति कवच तस्य विधि मन्त्रोच्चारेण सकलीकरणविधान विधातव्यः। एतत्सर्वं जपात्पूर्वं विधातव्यमित्यर्थ· ॥६०६॥ संपूर्णेनि—सपूर्णमति स्पष्ट। सनाद विन्दुसहितं ॐकार पञ्चपरमेष्ठिवाचकम्, आनन्दसुन्दरम् आनन्देन आत्मानुभवसुखेन सुन्दर रमणीयम्। जपत अस्य मुनेरुपासकस्य वा सर्वेषा समीहितानाम् अभिलषितानाम् अभ्युदयनि श्रेयसा सिद्धि प्राप्ति नि सशय सजायेत भवेत् ॥६०७॥ मन्त्र इति—परत्र मन्त्रे अन्यस्मिन्मन्त्रे ऋषिमण्डलादिमन्त्रे। फलोपलम्भे अभिलषितप्राप्तौ सत्यामपि। अयमेव पञ्चपरमेष्ठिमन्त्र सेव्य आराध्य। यद्यपि अग्रे शाखादिषु। विटपी वृक्ष। फलति प्रादुर्भूतफलो भवति। तथापि तस्य वृक्षस्य मूल जलेन सिच्यते। तदसिञ्चने न फलोपलब्धिस्तथा अस्मिन्मन्त्रे सेव्यमाने इतरेभ्य एतन्मूलकेभ्यो मन्त्रेभ्य फललाभो भवेत् ॥६०८॥ अत्रामुत्रेति—गुरुपञ्चकवाचकान्मन्त्रात् पञ्चपरमेष्ठिमन्त्रात्। आरोपमन्त्र अत्र अस्मिन् लोके। परत्र च स्वर्गादौ च। नियत निश्चयेन कामितफलसिद्धये अभीष्टफललाभाय। नाभूत् नाभवत्। नास्ति न भवति। न भविष्यति च ॥६०९॥ अभिलषितेति—अस्मिन् मन्त्रे इष्टपदार्थदाने सुरगोसदृशे सति कामधेनुसदृशे सति तथा अस्मिन्मन्त्रे दुरित पाप तदेव द्रुम तरु तस्य पावकेऽग्निसदृशे सति। दृष्टादृष्टफले दृष्ट लब्धम् ऐहलौकिकं धनादिकम् अदृष्ट पारलौकिक स्वर्गादिफल यस्य तथाभूते सति परत्रमन्त्रे

